




॥ श्रीगणेशाय नमः ॥

# अथ मेदिनीकोशप्रारम्भः ।



वृषाङ्काय नमस्तस्मै यस्य मौलिविलम्बिनी ।
जटावेष्टनजां शोभां विभावयति जान्हवी ॥ १ ॥
पूर्वाचार्यकृतीर्वीक्ष्य शब्दशास्त्रं निरूप्य च ।
नानार्थशब्दकोशोऽयं लिङ्गभेदेन कथ्यते ॥ २ ॥
प्रायशो रूपभेदेन विशेषणवशात्क चित् ।
स्त्रीपुन्नपुंसकं ज्ञेयं विशेषोक्तेश्च कुत्र चित् ॥ ३ ॥
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ४ ॥
रूपाद्व्यक्तं लिङ्गमुक्तं लिपिभ्रान्तिच्छिदे क चित् ।
विशेष्यनिघ्नेऽनुक्तेऽपि विज्ञेया वाच्यलिङ्गता ॥ ५ ॥
गुणे शुक्लादिकट्वाद्याः पुंसि स्युस्तद्वति त्रिषु ।
तीक्ष्णाद्याश्च गुणे क्लीबं गुणिलिङ्गास्तु तद्वति ॥ ६ ॥
क्लीबपुंसोरपि स्त्रीत्वं काप्यल्पत्वविवक्षया ।
जातिवाचकशब्दानामपि तत्स्त्रीविवक्षया ॥ ७ ॥
उद्भिदः प्रसवे क्लीबे हरीतक्यादयः स्त्रियाम् ।
पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥ ८ ॥
प्राङ् नानार्थात्र तल्लिङ्गं द्वयोर्द्वन्द्वे न चैकता ।
शब्दावृत्तिर्न लिङ्गैक्ये सप्तमी न विशेषणे ॥ ९ ॥

क्लीबे नपुंसके पुंसि स्त्रियां योषिति च द्वयोः ।
त्रिषु चेत्यादि यद्रूपं तल्लिङ्गस्यैव वाचकम् ॥ १० ॥
नानार्थः प्रथमान्तोऽत्र सर्वत्रादौ प्रदर्शितः ।
सप्तम्यन्ताभिधेयेषु वर्तमानो विनिश्चितः ॥ ११ ॥
एकद्वित्रिचतुःपञ्चषड्वर्णानुक्रमात्कृतः ।
स्वरकाद्यादिकाद्यान्तवर्गैर्नानार्थसंग्रहः ॥ १२ ॥
नानार्थकोशपुस्तकभारार्जनदुःखहानये कृतिनः ।
मेदिनिकरकृतकोशो विशुद्धलिङ्गोऽभिलिख्यतामेकः ॥ १३ ॥

( कैकम् । )

को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।
कामग्रन्थौ चक्रिणि च पतत्रिपार्थिवे तथा ॥ १४ ॥
मयूरेऽग्नौ न पुंसि स्यात्सुखशीर्षजलेषु कम् ।

( कद्वितीयम् । )

अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ ॥ १५ ॥
अङ्को रूपकभेदाङ्कचिन्हरेखाजिभूषणे ।
रूपकांशान्तिकोत्सङ्गस्थानेऽकं पापदुःखयोः ॥ १६ ॥
एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु ।
कर्कः कर्के ऽनिले वन्हौ शुक्लाश्वे दर्पणे घटे ॥ १७ ॥
कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः ।
कल्कोऽस्त्री घृततैलादिशेषे दम्भे बिभीतके ॥ १८ ॥
विट्विट्टयोश्च पापे च त्रिषु पापाशये पुनः ।
काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि ॥ १९ ॥
शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः ।
काका स्यात्काकनासायां काकोलीकाकजङ्घयोः ॥ २० ॥
रक्तिकायां मलप्त्रां च काकमाच्यां च योषिति ।

काकं सुरतबन्धे स्यात्काकानामपि संहतौ ॥ २१ ॥
किष्कुर्द्वयोर्वितस्तौ च प्रकोष्ठेऽपि करेऽपि च ।
कोकश्चक्रे वृके ज्येष्ठयां खर्जूरीद्रुमदर्दुरे ॥ २२ ॥
छेको गृहाश्रितमृगपक्षिणोर्नागरे त्रिषु ।
टङ्को नीलकपित्थे च खनित्रे टङ्कने स्त्रियाम् ॥ २३ ॥
जङ्घायां स्त्री पुमान्कोपे कोशासिग्रावदारणे ।
तर्कः काङ्क्षावितर्कोहहेतुशास्त्रेषु कथ्यते ॥ २४ ॥
त्रिका कूपस्य नेमौ स्यात्त्रिकं पृष्ठाधरे त्रये ।
तोकं पुत्रे सुतायां च द्विकः स्यात्काककोकयोः ॥ २५ ॥
न्यङ्कुर्मुनौ मृगे पुंसि नाकस्तु त्रिदिवेऽम्बरे ।
नाकुर्मुन्यन्तरे पृथ्वीधरवल्मीकयोः पुमान् ॥ २६ ॥
निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः ।
वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च ॥ २७ ॥
पङ्कोऽस्त्री कर्दमे पापे पाकः परिणतौ शिशौ ।
केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च ॥ २८ ॥
बकस्तु बकपुष्पे स्यात्कह्वे श्रीदे च रक्षसि ।
भूकं छिद्रे च काले च भेको मण्डूकमेघयोः ॥ २९ ॥
मुष्को मोक्षकवृक्षे स्यात्संहते वृषणेऽपि च ।
मूकस्त्ववाचि ना दैत्ये रेकः कृपणमन्दयोः ॥ ३० ॥
राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् ।
संपूर्णेन्दुतिथौ रेकः शङ्कानीचविरेचने ॥ ३१ ॥
रोकस्तु क्रयभिद्दीप्त्यो रोकं ना विचले बिले ।
लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च ॥ ३२ ॥
लोको जनेऽपि भुवने वल्कं वल्कलशल्कयोः ।
वङ्कुः पर्याणभागे ना नदीपात्रे च भङ्गुरे ॥ ३३

शल्कं तु शकले वल्के शको जात्यन्तरे नृपे ।
शङ्कुः संख्याऽस्त्रयादोभित्कीलाशकलुषेषु ना ॥ ३४ ॥
शङ्का त्रासे वितर्के च शाको द्वीपान्तरेऽपि च ।
शक्तौ द्रुमविशेषे च पुमान् हरितकेऽस्त्रियाम् ॥ ३५ ॥
शुको व्याससुते कीरे रावणस्य च मन्त्रिणि ।
शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् ॥ ३६ ॥
शुल्कं घट्टादिदेये स्याद्दाराद्यर्थग्रहे स्त्रियाम् ।
शूका स्त्रीशुङ्गदलयोः श्लोकः पद्ये यशस्यपि ॥ ३७ ॥
शौकं शुकगणे स्त्रीणां करणे सूक इत्यपि ।
बाणवातोत्पले स्तोकस्त्रिष्वल्पे चातके पुमान् ॥ ३८ ॥

( कतृतीयम् । )

अशोकस्त्रिषु निःशोके पुंसि कङ्केल्लिपादपे ।
स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम् ॥ ३९ ॥
अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले ।
अभीकः कामुके क्रूरे निर्भये त्रिषु ना कवौ ॥ ४० ॥
अनीकोऽस्त्री रणे सैन्ये ऽप्यणुको निपुणाल्पयोः ।
अलीकमप्रियेऽपि स्याद्दिव्यसत्ये नपुंसकम् ॥ ४१ ॥
अनूकं तु कुले शीलं पुंसि स्याद् गतजन्मनि ।
अंशुकं श्लक्ष्णवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः ॥ ४२ ॥
अन्तिकं निकटे वाच्यलिङ्गं स्त्री शीतलौषधौ
चुल्यां ज्येष्ठभगिन्यां च नाट्योक्त्यां कथ्यतेऽन्तिका॥४३॥
अलर्को धवलाऽर्के स्याद्योगान्मादितकुक्कुरे ।
अम्बिका पार्वतीमात्रोर्धृतराष्ट्रस्य मातरि ॥ ४४ ॥
अन्धिका द्यूतभेदे च रजन्यामपि योषिति ।
अम्लिका तिन्तिडीचाम्लोद्गारचाङ्गेरिकासु च ॥ ४५ ॥

अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च ।
आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे ॥ ४६ ॥
आढकी तु तुवर्यां स्त्री परिमाणाऽन्तरे त्रिषु ।
आलोकस्तु पुमान्द्योते दर्शने बन्दिभाषणे ॥ ४७ ॥
आन्हिकं दिननिर्वर्त्त्ये त्रिलिङ्गमथ न द्वयोः ।
नित्यक्रियाभोजनयो ग्रन्थे प्रकरणस्य च ॥ ४८ ॥
आतङ्को रोगसंतापशङ्कासु मुरजध्वनौ ।
इक्ष्वाकुः कटुतुम्ब्यां स्त्री सूर्यवंशनृपे पुमान् ॥ ४९ ॥
उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि ।
उदर्क एष्यत्कालीनफले मदनकण्टके ॥ ५० ॥
उष्मकस्तु निदाघे स्यादातुरे क्षिप्रकारिणि ।
उष्ट्रिका मृत्तिकाभाण्डभेदेऽपि करभस्त्रियाम् ॥ ५१ ॥
ऊर्मिका चाङ्गुलीये स्याद्वस्त्रभङ्गतरङ्गयोः ।
कनकं हेम्नि पुंसि स्यात्किंशुके नागकेसरे ॥ ५२ ॥
धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च ।
करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च ॥ ५३ ॥
द्वयोर्मेघोपले न स्त्री करे केचकमण्डलौ ।
क्रमुकस्तु पुमान्भद्रमुस्तके ब्रह्मदारुणि ॥ ५४ ॥
फले कार्पासिकायाश्च पट्टिकालोध्रपूगयोः ।
कटकोऽस्त्री नितम्बोऽद्रेर्दन्तिनां दन्तमण्डने ॥ ५५ ॥
सामुद्रलवणे राजधानीवलययोरपि ।
कटुका कटुरोहिण्यां स्त्रियां व्योषे नपुंसकम् ॥ ५६ ॥
कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे ।
नैयोगिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः ॥ ५७ ॥
करङ्को मस्तकेऽशस्यनालिकेरफलास्थनि ।

कलङ्कोऽङ्के ऽपवादे च कालायसमलेऽपि च ॥ ५८ ॥
कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि ।
क्रमुकादिच्छटांशेऽब्जवराटे कर्णभूषणे ॥ ५९ ॥
कणिका कथ्यतेऽत्यन्तसूक्ष्मवस्त्वग्निमन्थयोः ।
कचाकुस्तु दुराधर्षे दुःशीले च विलेशये ॥ ६० ॥
कञ्चुको वारबाणे स्यान्निर्मोके करभेऽपि च ।
वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके ॥ ६१ ॥
कञ्चुक्यौषधिभेदेऽथ कारिका नटयोषिति ।
कृतौ विवरणश्लोके शिल्पयातनयोरपि ॥ ६२ ॥
नपुंसकं तु कर्मादौ कारकं कर्तरि त्रिषु ।
कामुकः कमनेऽशोकपादपे चातिमुक्तके ॥ ६३ ॥
कामुकं धनुषि स्यान्ना वेणौ कर्मक्षमेऽन्यवत् ।
काचूकः कुकवाकौ स्यात्पीनमस्तककोकयोः ॥ ६४ ॥
क्षारकः पक्षिमत्स्यादिपिटके जालकेऽपि च ।
कालिका चण्डिकाभेदे कात्स्न्र्यवृश्चिकपत्रयोः ॥ ६५ ॥
क्रमदेयवस्तुमूल्ये धूसरीनवमेघयोः ।
पटोलशाखारोमालीमांसीकाकशिवासु च ॥ ६६ ॥
मेघावलौ च किम्पाको महाकालफलाज्ञयोः ।
कीचको दैत्यभिद्वातहतसस्वनवंशयोः ॥ ६७ ॥
कीटकः कृमिजातौ ना निष्ठुरे पुनरन्यवत् ।
कुलकं तु पटोले स्यात्सम्बद्धश्लोकसंहतौ ॥ ६८ ॥
पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते ।
क्षुल्लकस्त्रिषु नीचेऽल्पे कुशिको मुनिसर्जयोः ॥ ६९ ॥
कुषाकुः कपिवन्ह्यर्के नापरोत्तापिनि त्रिषु ।
कुलिको नागभेदे स्याद् द्रुभेदे कुलसत्तमे ॥ ७० ॥

क्षुरकः कोकिलाक्षे स्याद् गोक्षुरे तिलकद्रुमे ।
कूपको गुणवृक्षे स्यात्तैलपात्रे ककन्दुरे ॥ ७१ ॥
उदपानेऽच्युतायां तु कूपिकाऽम्भोगतोपले ।
कूलकं न स्त्रियां स्तूपे पुंसि स्यात् कृमिपर्वते ॥ ७२ ॥
कूचिका सूचिकायां च तूलिकायां च कुड्मले ।
कपाटाङ्कुडके क्षीरविकृतावपि योषिति ॥ ७३ ॥
कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत् ।
कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः ॥ ७४ ॥
कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः ।
तथापरंपरायातमङ्गले च कुतूहले ॥ ७५ ॥
विवाहसूत्रगीतादिभोगयोरपि न द्वयोः ।
कौशिको नकुले व्यालग्राहे गुग्गुलुशुक्रयोः ॥ ७६ ॥
कोषज्ञोलूकयोश्च स्याद्विश्वामित्रमुनावपि ।
कौषिकी चण्डिकायां च नदीभेदे च योषिति ॥ ७७ ॥
खनको नोन्दुरे सन्धिचौरे त्रिष्ववदारके ।
खड्गिको माहिषीक्षीरफेनशौनिकयोरपि ॥ ७८ ॥
स्यात्खोलकस्तु पाके शिरस्त्रवल्मीकपूगकोशेषु ।
गणिकायूथीवेश्ये भीतकारीषु ना तु दैवज्ञे ॥ ७९ ॥
ग्रन्थिकं पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयोः ।
करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे ॥ ८० ॥
गण्डकः पुंसि खड्गे स्यात्संख्याविद्याप्रभेदयोः ।
अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे ॥ ८१ ॥
ग्राहको घातिविहगे धान्यानां च गृहीतरि ।
गान्धिको लेखकेऽपि स्यात्सुगन्धिव्यवहारिणि ॥ ८२ ॥
गुण्डको मलने धूलौ कलोक्तिस्नेहपात्रयोः ।

गृह्यको निघ्नके छेके गैरिकं धातुरुक्मयोः ॥ ८३ ॥
गोलको विधवापुत्रे जारात् स्यान्मणिके गुडे ।
गोरङ्कुः स्यात्पुमान्पक्षिभेदलग्नकबन्दिनोः ॥ ८४ ॥
चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोः ।
चुलकः प्रसृतौ भाण्डभेदे चुलुकवत्पुमान् ॥ ८५ ॥
चतुष्की मशकहर्यां पुष्करिण्यन्तरेऽपि च ।
चारकः पालकेऽश्वादेः स्यात्संचालकबन्धयो ॥ ८६ ॥
चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाठिषु ।
चुम्बकश्चुम्बनपरे धूर्तायस्कान्तयोरपि ॥ ८७ ॥
बहुग्रन्थैकदेशज्ञे घटस्योर्द्ध्वावलम्बने ।
चुल्लकी शिशुमारेऽपि कुण्डीभेदे कुलान्तरे ॥ ८८ ॥
चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम् ।
चूतकः कूपके ऽप्याम्रे जनकः पितृभूभुजोः ॥ ८९ ॥
जम्बूकः फेरवे नीचे पश्चिमाशापतावपि ।
जतुका जिनपत्रायां जतुकं हिङ्गुलाक्षयोः ॥ ९० ॥
जाहको घोङ्गमार्जारखट्वाङ्गारुण्डिकासु च ।
जालकं कोरके दम्भे कुलायानाययोरपि ॥ ९१ ॥
न पुंसि मोचकफले स्त्रियां तु वसनान्तरे ।
गिरि सारजलौकायामपि स्याद्विधवास्त्रियाम् ॥ ९२ ॥
भटानामश्मरचिताङ्गरक्षिण्यां च जालिका ।
जालिको वाच्यवद्ग्रामजालिजालोपजीविनोः ॥ ९३ ॥
जीवकः प्राणके पीतशालक्षपणयोरपि ।
कूर्चशीर्षेऽपि पुंसि स्यादाजीवे जीविका मता ॥ ९४ ॥
त्रिषु सेविनि वृद्ध्याशिनोराहितुण्डिके ।
झल्लकोद्वर्तनपटे स्त्रियां द्योते च झिल्लिका ॥ ९५ ॥

आतपस्य रुचौ झिण्ट्यां टुण्टुकः शोणकालपयोः ।
डिम्बिका जलबिम्बे स्यान्मोणके कामुकस्त्रियाम् ॥९६॥
तण्डकः खञ्जने फेने समासप्रायवाचि च ।
गृहदारुतरुस्कन्धमायाबहुलकेष्वपि ॥ ९७ ॥
तक्षकस्तु पुमान्नागराजभेदे च वर्द्धकौ ।
तारके दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि ॥ ९८ ॥
कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु ।
तिलको द्रुमरोगाश्वभेदे च तिलकालके ॥ ९९ ॥
क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके ।
त्रिशङ्कुर्ना राजभेदे शलभे वृषदंशके ॥ १०० ॥
तुरुष्कः सिल्हके म्लेच्छजातौ देशान्तरेऽपि च ।
तूलिका कूर्चिकायां च शय्योपकरणेऽपि च ॥ १ ॥
दर्शकः स्यात्प्रतीहारे दर्शयितृप्रवीणयोः ।
दारको बालकेऽपि स्याद्भेदके त्वभिधेयवत् ॥ २ ॥
द्रावको ग्रावभेदे स्याद्विदग्धे मोषकेऽपि च ।
दीपकं वागलङ्कारे वाच्यवद्दीप्तिकारके ॥ ३ ॥
दीप्यकंश्चाजमोदायां यवानीबर्हिचूडयोः ।
दुच्छको गन्धकुट्यां स्याद्विहाराद्यवकाशके ॥ ४ ॥
दूपिका तूलिकायां च मले स्याल्लोचनस्य च ।
धनिका साधुनार्यां ना धान्याके त्रिसाधुधनिनोश्च ॥ ५ ॥
स्याद्धेनुका करिण्यां धेनावपि ना तु दानवविशेषे ।
धैनुकं करणे स्त्रीणां धेनूनामपि संहतौ ॥ ६ ॥
नर्तकः केवले पोटगलचारणयोर्नटे ।
नर्तकी लासिकायां च करेण्वामपि योषिति ॥ ७ ॥
नग्निका ऽपि कुमार्यां स्यात्पुमान्क्षपणवन्दिनोः ।

नरकः पुंसि निरयदेवारातिप्रभेदयोः ॥ ८ ॥
नन्दको हरिखड्गे च हर्षके कुलपालके ।
नालीकः शरशल्याङ्गेष्वब्जखण्डे नपुंसकम् ॥ ९ ॥
नायको नेतरि श्रेष्ठे हारमध्यमणावपि ।
निर्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके ॥ १० ॥
नीलिका नीलिनीक्षुद्रारोगशेफालिकासु च ।
पराकस्तु व्रते खड्गे प्रसेकः सेचने श्च्युतौ ॥ ११ ॥
प्रतीकोऽवयवेऽपि स्यात् प्रतिकूलविलोमयोः ।
पद्मकं स्यात्पद्मकाष्ठबिन्दुजालकयोरपि ॥ १२ ॥
पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके ।
पल्यङ्को मञ्चपर्यङ्के वृषीपर्यास्तिकासु च ॥ १३ ॥
पताका वैजयन्त्यां च सौभाग्यनाटकाङ्कयोः ।
पातुकः पतयालौ स्यात्प्रपातजलहस्तिनोः ॥ १४ ॥
प्राणकः सत्त्वजातीये जीवकद्रुमचोलयोः ।
पाटकः स्यान्महाकिष्कौ कटकान्तरवाद्ययोः ॥ १५ ॥
अक्षादिचोलने मूलद्रव्यापचयरोधसोः ।
पालङ्कः शल्लकीशाकभेदयोः प्राजिपक्षिणि ॥ १६ ॥
पावकोऽग्नौ सदाचारे वन्हिमन्थे च चित्रके ।
भल्लातके विडङ्गेऽथ प्रियकः पीतशालके ॥ १७ ॥
नीपे चित्रमृगे चालौ प्रियङ्गौ कुङ्कुमेऽपि च ।
पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाल्हीकसिल्हके ॥ १८ ॥
पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः ।
पिटकस्त्रिषु विस्फोटे मञ्जूषायां पुनः पुमान् ॥ १९ ॥
पिष्टको घृतपूपादौ नेत्ररोगान्तरेऽपि च ।
पुलकः कृमिप्रभेदे प्रस्तरभेदे च मणिदोषे ॥ २० ॥

रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धर्वे ।
पुलाकस्तुच्छधान्ये स्यात्सङ्क्षेपे भक्तसिक्तके ॥ २१ ॥
पुष्पकं रीतिपुष्पे च विमाने धनदस्य च ।
नेत्ररोगे तथारत्नकङ्कणे च रसाञ्जने ॥ २२ ॥
लोहकांस्ये मृदङ्गारशकट्यां च नपुंसकम् ।
स्यात्पुत्रिका पुत्तलिका दुहित्रोर्यावतूलके ॥ २३ ॥
ना पुत्रे सरभे धूर्ते शैलवृक्षप्रभेदयोः ।
पूर्णकः स्वर्णचूडे स्यान्नासाच्छिन्न्यां तु पूर्णिका ॥ २४ ॥
पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान् ।
पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत् ॥ २५ ॥
पेचको गजलाङ्गूलमूलोपान्ते च कौशिके ।
पेटकं पुस्तकादीनां मञ्जूषायां कदम्बके ॥ २६ ॥
वल्मीको रोगभेदे च नाकौ च पुन्नपुंसकम् ।
बन्धूकं बन्धुजीवे स्याद्बन्धूकः पीतशालके ॥ २७ ॥
बन्धकः स्याद्विनिमये पुंश्चल्यां स्याच्च बन्धकी ।
बाहुलः कर्कटे चार्के दात्यूहे जलखातके ॥ २८ ॥
वराकः शङ्करे पुंसि शोचनीयेऽभिधेयवत् ।
बालकस्तु शिशावज्ञे बालधौ हयहस्तिनोः ॥ २९ ॥
अङ्गुलीयकह्रीबेरवलये पुंसि बालिका ।
बालायां बालुका पत्रकाहलाकर्णभूषणे ॥ ३० ॥
वारकोऽश्वगतौ पुंसि वाच्यवत्स्यान्निषेधके ।
वालुका सिकतासु स्याद्वालकं त्वेलवालुके ॥ ३१ ॥
भर्मकं रोगभेदे स्याद्दिडङ्ककलधौतयोः ।
भ्रामको जम्बुके धूर्ते सूर्यावर्त्ताश्मभेदयोः ॥ ३२ ॥
भालाङ्कः करपत्रे स्याच्छाकभेदे च रोहिते ।

महालक्षणसम्पन्नपुरुषे कच्छपे हरे ॥ ३३ ॥
भूमिका रचनायां स्याद्देशान्तरपरिग्रहे ।
भूतीकमपि भूनिम्बे दीप्यकर्पूरके तृणे ॥ ३४ ॥
मधुका मधुपर्ण्यां स्यान्मधुकं क्लीतके खगे ।
वल्यन्तरे ना मशको रोगकीटप्रभेदयोः ॥ ३५ ॥
मण्डूकः शोणके मुन्यन्तरे स्याद् गूढवर्चसि ।
मण्डूकपर्ण्यां मण्डूकी मल्लिको हंसभिद्यपि ॥ ३६ ॥
मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः ।
मामकं स्यान्मदीयार्थे त्रिषु पुंसि तु मातुले ॥ ३७ ॥
मातृका धातृकामात्रो दैवीभिद्वर्णमालयोः ।
मालिका सप्तलापुत्रीग्रीवालङ्करणेषु च ॥ ३८ ॥
पुष्पमाल्ये नदीभेदे पक्षिभेदे तु मालिकः ।
मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान् ॥ ३९ ॥
तद्युक्ते वाच्यवत्क्लीबं स्रोतोऽञ्जनान्धकारयोः ।
मोचकः कदले शिग्रुनिर्मोचकत्रिरागिषु ॥ ४० ॥
मोदकः खाद्यभेदेऽ स्त्री हर्षुके पुनरन्यवत् ।
यमकं यमजे शब्दालङ्कारे पुंसि संयमे ॥ ४१ ॥
याजकस्तु गजे राज्ञो याज्ञिकेऽप्यथ याज्ञिकः ।
याजके च कुशे चाथ युतकं संशये युगे ॥ ४२ ॥
नारीवस्त्राञ्चले युक्ते चलनाग्रेऽपि यौतके ।
यूथिका म्लानके पुष्पविशेषेऽपि च योषिति ॥ ४३ ॥
रसिका स्त्री रसालेक्षुरसयोः सरसे त्रिषु ।
रक्तकोऽम्लानवन्धूकरक्तवस्त्रानुरागिषु ॥ ४४ ॥
राजिकाऽपि च केदारे राजसर्षपरेखयोः ।
रात्रकम्पञ्चरात्रे ना वेश्यावेश्माब्दवासिनि ॥ ४५ ॥

रुचको बीजपूरे च निष्के दन्तकपोतयोः।
न द्वयोः सर्जिका क्षारेऽप्यश्वाभरणमाल्ययोः ॥ ४६ ॥
सौवर्चलेऽपि मङ्गल्यद्रव्ये चाप्युत्कटेऽपि च।
रुण्डिका द्वारपिण्ड्यां च दूतिकायां रणक्षितौ ॥ ४७ ॥
रूपकं नाटके मूर्त्ते काव्यालङ्करणेऽपि च।
रेणुकाऽपि हरेऽणौ च जामदग्न्यस्य मातरि ॥ ४८ ॥
रोहकः प्रेतभेदे ना रोढरि त्रिषु विश्रुतः।
लम्पाको लम्पटे देशे लासको लास्यकारिणि ॥ ४९ ॥
मयूरे लसके चाथ लूनको भेदिते पशौ।
लोचको मांसपिण्डेऽक्षितारकायां च कज्जले ॥ ५० ॥
ललाटाभरणे स्त्रीणां कदलीनीलवस्त्रयोः।
निर्बुद्धौ कर्णपूरे च मूर्व्यां भूश्लथचर्मणि ॥ ५१ ॥
वसुकं रोमके पुंसि शिवमल्यर्कपर्णयोः।
वर्णकश्चारणे ऽस्त्री तु चन्दने च विलेपने ॥ ५२ ॥
द्वयोर्नाल्यादिषु स्त्री स्यादुत्कर्षे कथनस्य च।
वर्तकस्तु खुरेऽश्वस्य विहगे वर्तकीद्वयोः ॥ ५३ ॥
वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके।
व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने ॥ ५४ ॥
ना नागरेऽथ वाल्हीकं वाल्हीकं धीरहिङ्गुनोः।
द्वावेतौ पुंसि देशस्य प्रभेदे तुरगान्तरे ॥ ५५ ॥
वार्द्धकं वृद्धसङ्घाते वृद्धस्य भावकर्मणोः।
वार्षिकं त्रायमाणायाङ्क्लीवं वर्षाभवे त्रिषु ॥ ५६ ॥
वालकोऽस्त्री पारिहार्य्ये त्रिषु स्यादङ्गुरीयके।
वितर्कस्तु पुमानूहे संशये च निगद्यते ॥ ५७ ॥
विपाकः पचने स्वादे कर्मणो विसदृक्फले।

विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः ॥ ५८ ॥
वृश्चिकश्च द्रुणे राशौ शूककीटौषधीभिदोः ।
वृषाङ्कः शङ्करे साधौ भल्लातकमहत्त्वयोः ॥ ५६ ॥
वैजिकं शिग्रतैले स्याद्धेतौ सद्योऽङ्कुरे तु ना ।
शलाका शल्यमदनशारिकाशल्लकीषु च ॥ ६० ॥
छत्रादिकाष्ठीशरयोः शल्लकी पशुवृक्षयोः ।
शम्बूको गजकुम्भान्ते घोङ्गे च शूद्रतापसे ॥ ६१ ॥
जलजन्तुविशेषे च शुम्बूका न नपुंसकम् ।
शुम्बूका बलये कम्बावस्त्री पुंसि शिरोरुजि ॥ ६२ ॥
शार्कक: स्याद् दुग्धफेनशर्करापिण्डयोः पुमान् ।
शिशुकः शिशुमारे स्याद्बालकोलूपिनोरपि ॥ ६३ ॥
शीतकः शीतकाले च सुस्थिते दीर्घसूत्रिणि ।
शूलकः प्रावटेऽपि स्याद्रसेऽपि परिकीर्तितः ॥ ६४ ॥
सस्यको मणिभेदेऽसौ सम्पर्को मेलके रतौ ।
सम्पाकस्तर्कके धृष्टे त्रिषु ना चतुरङ्गुले ॥ ६५ ॥
स्यमीका नीलिकायां स्त्री स्यमीको नाकुवृक्षयोः ।
स्वस्तिको मङ्गलद्रव्ये चतुष्कगृहभेदयोः ॥ ६६ ॥
सरकोऽस्त्री सीधुपाने शीधुपात्रेक्षुसीधुनोः ।
अच्छिन्नाध्वगपङ्क्तौ च सायकः शरखड्गयोः ॥ ६७ ॥
स्थासकः पुंसि चार्चिक्ये जलादेरपि बुद्बुदे ।
सूचकः सीवनद्रव्ये बोधके पिशुने शुनि ॥ ६८ ॥
ओतौ काके सूतकोऽस्त्री पारदे न द्वयोर्जनौ ।
सृदाकु र्ना ऽनिले वज्रे ज्वलने प्रतिसूर्यके ॥ ६६ ॥
सेवकस्तु प्रसेवे ना वाच्यलिङ्गोऽनुजीविनि ।
सेचकः स्यात्पुमान्मेघे वाच्यलिङ्गस्तु सेक्तरि ॥ ७० ॥

सैनिकः सैन्यरक्षे च स्यात्सेनासमवेतके।
हारकः कितवे चौरे गद्यविज्ञानभेदयोः॥ ७१॥
हुडुक्को वाद्यभेदे च मत्तदात्यूहपक्षिणि।
हेरुको बुद्धभेदे स्यान्महाकालगणेऽपि च॥ ७२॥

(कचतुर्थम्।)

भवेदलिमको भेके पिकेऽलौ पद्मकेसरे।
मधूकेऽप्यथालिपको भृङ्गकोकिलकुक्कुरे॥ ७३॥
अङ्गारकः कुजेऽपि स्यादुन्मूकांशे कुरुण्टके।
भवेदङ्गारिका चेक्षुकाण्डे किंशुककोरके॥ ७४॥
स्यादश्मन्तकमुद्धाने मल्लिकाच्छदनेऽपि च।
आकल्पकस्तमोमोहग्रन्थावुत्कलिकामुदोः॥ ७५॥
आक्षेपकोऽनिलव्याधौ व्याधे निन्दाकरेऽपि च।
भवेदाखनिकश्चौरे शूकरे मूषकेऽपि च॥ ७६॥
कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु।
एडमूकोऽन्यलिङ्गः स्याच्छठे वाक्श्रुतिवर्जिते॥ ७७॥
कठिल्लकस्तु पर्णाशे वर्षाभूकारविल्लयोः।
कपर्दको वराटे स्याज्जटाजूटे च धूर्जटेः॥ ७८॥
कर्कोटकः स्यान्मालूरकाद्रवेयप्रभेदयोः।
कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्गके॥ ७९॥
कनीनिका तारकोऽक्ष्णः स्यात्कनिष्ठाङ्गुलावपि।
कापटिकोऽन्यमर्मज्ञे छात्रे पुंसि शठे त्रिषु॥ ८०॥
काकरुको नग्नदम्भस्त्रीजितोलूकभीरुषु।
निम्ने कुरुवकः शोणाम्लानभिण्टीप्रभेदयोः॥ ८१॥
कुरण्टकः पीतपुष्पाम्लानभिण्टीकयोः पुमान्।
कृकवाकुर्मयूरेऽपि सरटे चरणायुधे॥ ८२॥

कोशातकः कठे पुंसि पटोल्या घोषके स्त्रियाम् ।
अथ कौक्कुटिकोऽदूरप्रेरिताक्षे च दाम्भिके ॥ ८३ ॥
कौलेयकः सारमेये कुलीनेऽथ खरालिकः ।
ग्रामणीभण्डिनाराचेऽप्युपधाने च पुंस्ययम् ॥ ८४ ॥
भवेद् गुणनिका नृत्तशून्याङ्के पाठनिश्चितौ ।
गोकण्टको गोक्षुरके स्थपुटे च गवां खुरे ॥ ८५ ॥
गोमेदकं पीतमणौ काकोले पत्रकेऽपि च ।
स्याद् गोकुलिको वलिरे पङ्कस्थगव्युपक्षके ॥ ८६ ॥
अथ घर्घरिका क्षुद्रघण्टावादित्रदण्डयोः ।
चर्चरीको महाकाले केशविन्यासशाकयोः ॥ ८७ ॥
चण्डालिका किन्नरायामुमायामोषधीभिदि ।
अथ चातुरकश्चक्रगण्डौ पुंस्यभिधेयवत् ॥ ८८ ॥
गोचरे लोचनस्यापि चटुकारे नियन्तरि ।
जर्जरीकं बहुच्छिद्रे जरातुरेऽपि वाच्यवत् ॥ ८९ ॥
जीवन्तिका गुडूच्यां च जीवाख्यशाकवन्दयोः ।
जैवातृकः पुमान्सोमे दीर्घायुःकृशयोस्त्रिषु ॥ ९० ॥
तर्तरीकं वहित्रे स्यान्न द्वयोः पारगे त्रिषु ।
तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे ॥ ९१ ॥
त्रिवर्णकं गोक्षुरके त्रिफलायां कटुत्रिके ।
दलाढकः स्वयंयाततिले पृश्न्यां च गैरिके ॥ ९२ ॥
फेनखातकयोर्नागकेसरे च महत्तरे ।
दन्दशूकस्तु पुल्लिङ्गो राक्षसे च सरीसृपे ॥ ९३ ॥
दासेरकस्तु करभे दासीपुत्रे च धीवरे ।
नियामकः कर्णधारे पोतवाहे नियन्तरि ॥ ९४ ॥
निश्वारकः पुरीषस्य क्षये स्वैरे समीरणे ।

निर्ग्रन्थकः स्यात्क्षपणे निष्फले ऽप्यपरिच्छदे ॥ १९५ ॥
प्रचलाकः शराघाते शिखण्डे च भुजङ्गमे ।
प्रकीर्णकं चामरे स्याद्विस्तारे ना तुरङ्गमे ॥ १९६ ॥
पञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः ।
स्यात्पिप्पलकं वक्षोजवृन्ते सीवनसूत्रके ॥ १९७ ॥
पिण्डीतकः स्यात्तगरे मदनाख्यमहीरुहे ।
अथ पुष्कलको गन्धमृगे क्षपणकीलयोः ॥ १९८ ॥
पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे ।
पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च ॥ १९९ ॥
भवेत् पूर्णानकं वर्द्धापने च पटहेऽपि च ।
फर्फरीकश्चपेटे स्यात्फर्फरीकं तु मार्दवे ॥ २०० ॥
बलाहको गिरौ मेघे दैत्यनागविशेषयोः ।
वराटकः पद्मबीजकोशे रज्जौ कपर्दके ॥ १ ॥
वकेरुका बलाकाभिद्वातावर्जितशाखयोः ।
वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके ॥ २ ॥
वर्त्तुलेऽथो वाणिजको बाडवाग्नौ वणिज्यपि ।
वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु ॥ ३ ॥
अथ भ्रमरको भृङ्गे गिरिके चालकान्तरे ।
भट्टारको नृपे नाट्यवाचा देवे तपोधने ॥ ४ ॥
भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे ।
भार्याटिकः पुमान्भार्यानिर्जिते हरिणान्तरे ॥ ५ ॥
भवेन्मरुवकः पुष्पविशेषे मदनद्रुमे ।
मण्डोदकं चित्तरागे क्लीबमातर्पणेऽपि च ॥ ६ ॥
भवेन्मण्डलकं विम्बे कुष्ठभेदे च दर्पणे ।
अथ मर्कटकः सस्यभेदे वानरलूतयोः ॥ ७ ॥

मयूरकोऽप्यपामार्गे क्लीबं तुत्थाञ्जने पुनः ।
माणवको हारभेदे बाले कुपुरुषेऽपि च ॥ ८ ॥
मृष्टेरुको वदान्येऽपि मिष्टाशिन्यतिथिद्विषि ।
रतर्द्धिकं स्याद्दिवसे सुखस्थानेष्टमङ्गले ॥ ९ ॥
राधरेकः पुमान्सीरे सीरके च घनोपले ।
लालाटिकः प्रभोर्भावदर्शिन्याश्लेषणान्तरे ॥ १० ॥
कार्याक्षमे लेखनिकः कथितो लेखहारके ।
लेखेषु परहस्तेन स्वहस्तस्य च लेखके ॥ ११ ॥
वर्त्तरूको नदीभेदे काकनीडे जलावटे ।
विनायकस्तु हेरम्बे तार्क्ष्यविघ्ने जिने गुरौ ॥ १२ ॥
वितुन्नकस्तु धान्याके झाटामलमयूरके ।
विशेषको ऽस्त्री तिलके विशेषयितरि त्रिषु ॥ १३ ॥
विदूषकश्चाटुवटौ परनिन्दाकरेऽपि च ।
वैनाशिकः स्यात्क्षणिके परतन्त्रोर्णनाभयोः ॥ १४ ॥
वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि च ।
वैतालिकः पुमान् खेट्टिताले बोधकरे त्रिषु ॥ १५ ॥
शतानीकस्तु वृन्दे स्यान्मणिराजप्रभेदयोः ।
शालावृकः शृगाले स्यात्सारमेये वलीमुखे ॥ १६ ॥
शिलाटकः पुमानट्टे विलेपे परिकीर्तितः ।
शृगालिका शिवायां स्यात् त्रासादपि पलायने ॥ १७ ॥
शृङ्गाटकं भवेद् वारिकण्टके च चतुष्पथे ।
सन्तानिकाऽपि क्षीरादिसारे मर्कटजालके ॥ १८ ॥
सन्दंशिका ऽपि सुकुटीलोहयन्त्रविशेषयोः ।
सञ्चारिका तु युगले कुट्टनीघ्राणयोरपि ॥ १९ ॥
सङ्घाटिका स्त्रियां युग्मे कुट्टिन्यां जलकण्टके ।

सुप्रतीकः शोभनाङ्गे भवेदीशानदिग्गजे ॥ २० ॥
अथ सैकतिकं मात्रयात्रामङ्गलसूत्रके ।
ना संन्यस्ते क्षपणके त्रिपु सन्देहजीविनि ॥ २१ ॥
सोमवल्कस्तु धवलखदिरेकट्फलेऽपि च ।
सौगन्धिकं तु कल्हारे पद्मरागेऽपि कत्तृणे ॥ २२ ॥
पुंलिङ्गो गन्धपाषाणे सुगन्धव्यवहारिणि ।

( कपञ्चमम )

अनेडमूकमुद्दिष्टः शठे वाक्श्रुतिवर्जिते ॥ २३ ॥
स्यादाच्छुरितकं हासनखराघातभेदयोः ।
उपकारिकोपकार्यां पिष्टभेदे नृपालये ॥ २४ ॥
कक्ष्यावेक्षक इत्येष शुद्धान्तोद्यानपालयोः ।
रङ्गाजीवे कवौ खड्गे द्वाःस्थे ऽथ कूटखादकः ॥ २५ ॥
खादके काचकलशे बलिपुष्टे च जम्बुके ।
कृमिकण्टकं तु चित्राङ्गविडङ्गोदुम्बरेषु च ॥ २६ ॥
गोजागरिकं मङ्गले पुंसि स्यात्कण्टकारके ।
चिलमीलिका तु कण्ठीभेदे खद्योतविद्युतोः ॥ २७ ॥
अथो जलकरङ्कः स्यान्नालिकेरफलेऽम्बुजे ।
शङ्खे जललतायां च वारिवाहे च कीर्त्तितः ॥ २८ ॥
जलतापिक इल्लीसकाकेचीऋषयोश्च पुंसि स्यात् ।
नवफलीका स्त्री नव्ये नवजातरजोऽङ्गनायाञ्च ॥ २९ ॥
नागवारिक उद्दिष्टो राजकुञ्जरहस्तिपे ।
गणस्थराजगरुडे चित्रमेखलकेऽपि च ॥ ३० ॥
स्याद् व्रीहिराजिकः कङ्गुधान्यचीनकधान्ययोः
व्यवहारिका स्याल्लोकयात्रासम्मार्जनीङ्गुदे ॥ ३१ ॥
शतपर्विका तु दूर्वायां वचायामपि योषिति ।

शीतचम्पक इत्येष स्यादातर्पणदीपयोः ॥ ३२ ॥
सुवसन्तक उद्दिष्टो वासन्त्यां मदनोत्सवे ।
साद्धेमपुष्पिका यूथ्यां चम्पके हेमपुष्पकः ॥ ३३ ॥

( कषष्ठम् )

ग्राममद्गुरिका ग्रामयुद्धे शृङ्गीझषे स्त्रियाम् ।
मदनशलाका कामोद्दीपकभैषज्यसारिकयोः ॥ ३४ ॥
मातुलपुत्रक इत्यपि मामकतनये फले च धूर्तस्य ।
वर्णविलोडक एव श्लोकस्तेने च सन्धिचौरे च ॥ २३५ ॥
सिन्दूरतिलक उक्तो मतङ्गजे स्त्री तु कामिन्याम् ।

## ( इति कान्तवर्गः )

( खैकम् )

खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि ।
संवेदने देवलोके कर्मण्यपि नपुंसकम् ॥ १ ॥

( खद्वितीयम् )

नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुन्नपुंसकम् ।
न्युङ्खः सम्यङ्मनोज्ञे च साम्नः षट्प्रणवेषु च ॥ २ ॥
प्रेङ्खा पर्यटने ऽप्यश्वगतौ संवेशनान्तरे ।
मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि ॥ ३ ॥
सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसके ।
लेखो लेख्ये सुरे लेखा लिपिराजिकयोर्मता ॥ ४ ॥
रिङ्खा ऽश्वगतिभेदेऽपि शूकशिम्ब्यां च नर्तने ।
शङ्खः कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे ॥ ५ ॥
शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयोः ।
शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके ॥ ६ ॥

चूडामात्रे शिखायां च ज्वालायां प्रपदेऽपि च।
सखा मित्रे सहाये ना वयस्यायां सखी मता॥ ७॥
सुखं शर्मणि नाके च सुखा पुर्यां प्रचेतसः।

(खतृतीयम्।)

गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने॥ ८॥
पुंसि मातलिपुत्रे च महादेवगणान्तरे।
त्रिशिखो राक्षसे क्लीबं त्रिशूले मण्डलान्तरे॥ ९॥
दुर्मुखः कपिभिन्नागभिदोर्ना मुखरे त्रिषु।
प्रमुखः प्रथमे श्रेष्ठे मयूखः किरणेऽपि च॥ १०॥
ज्वालायामपि शोभायां विशिखस्तोमरे शरे।
विशिखा तु खनित्र्यां च रथ्यानलिकयोरपि॥ ११॥
विशाखस्तर्कके स्कन्दे स्त्रियामृक्षे कठिल्लके।
वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्तितः॥ १२॥
सुमुखस्तार्क्ष्यतनये शाखनागप्रभेदयोः।

(खचतुर्थम्।)

भवेदग्निमुखो देवे विप्रे भल्लातके स्त्रियाम्॥ १३॥
अथाग्निशिखमुद्दिष्टं कुसुम्भे कुङ्कुमेऽपि च।
लाङ्गलिक्याख्यौषधौ च विशल्यायां च योषिति॥ १४॥
इन्दुलेखाऽमृतासोमलताशशिकलासु च।
अथ बद्धशिखा स्त्री स्यादुच्चटायां शिशौ त्रिषु॥ १५॥
महाशङ्खौ मानुषास्थिसङ्ख्याभेदालिकेषु च।
भवेद्व्याघ्रनखं कन्दगन्धद्रव्यविशेषयोः॥ १६॥
नखक्षतान्तरे क्लीबं शिलीमुखोऽलिकाण्डयोः।
शशिलेखा कलाभागे गुडूचीवृत्तभेदयोः॥ १७॥
भवेत्स्वस्तिमुखो लेखे ब्राह्मणे वन्दिनि त्रिषु।

( खपञ्चमम् । )

मलिनमुखोऽग्नौ गोलाङ्गूले पुंसि त्रिषु क्रूरे ॥ १८ ॥
शीतमयूखश्चन्द्रे घनसारे चापि पुंलिङ्गः ।
सर्वतोमुख उग्रे च क्षेत्रज्ञब्रह्मणोः पुमान् ॥ १९ ॥
नपुंसके तु पानीये सुरवर्त्मन्यपि स्मृतम् ।

( इति खान्तवर्गः )

( गैकम् । )

गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् ।
स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च ॥ १ ॥

( गद्वितीयम् । )

अगः स्यान्नगवत् पृथ्वीधरपादपयोः पुमान् ।
अङ्गं गात्रे प्रतीकोपाययोः पुम्भूम्नि नीवृति ॥ २ ॥
क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ।
इङ्गः स्यादद्भुते ज्ञाने जङ्गमेङ्गितयोरपि ॥ ३ ॥
खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे ।
खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके ॥ ४ ॥
गाङ्गस्तु गङ्गासम्भूते त्रिषु भीष्मे गुहे पुमान् ।
चङ्गस्तु शोभने दक्षे टङ्गो ऽस्त्री स्यात्खनित्रके ॥ ५ ॥
खड्गभेदे च जङ्घायां खागे दाने च वर्जने ।
तुङ्गी निशावर्चवयोः पुन्नागनगयोः पुमान् ॥ ६ ॥
उन्नते त्रिषु दुर्गोमानील्योः स्त्री दुर्गमे त्रिषु ।
नागं नपुंसकं रङ्गे सीसके करणान्तरे ॥ ७ ॥
नागः पन्नगमातङ्गक्रूराचारिषु तोयदे ।
नागकेसरपुन्नागनागदन्तकमुस्तके ॥ ८ ॥

देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः।
पिङ्गा गोरोचनाहिङ्गुनालिकाचण्डिकासु च ॥ ९ ॥
पिङ्गी शम्यां पिशङ्गे ना बालके तु नपुंसकम्।
पूगस्तु क्रमुके वृन्दे फलसारेऽभिधेयवत् ॥ १० ॥
नदीभेदे मलघ्नां स्त्री भङ्गो जयविपर्यये।
भेदरोगतरङ्गेषु भङ्गा सस्यान्तरे स्त्रियाम् ॥ ११ ॥
भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु।
माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ ॥ १२ ॥
भागो रूपार्द्धके भाग्यैकदेशयोर्भृगुः पुमान्।
मुनौ हरे तटे शुक्रे भृङ्गो धूम्याटपिङ्गयोः ॥ १३ ॥
मधुव्रते भृङ्गराजे पुंसि भृङ्गी गुडत्वचि।
भोगः सुखे धने चाहेः शरीरफणयोरपि ॥ १४ ॥
पालने व्यवहारे च योषिदादिभृतावपि।
मार्गो मृगमदे मासप्रभेदेऽन्वेषणाध्वनोः ॥ १५ ॥
मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः।
अन्वेषणे च याञ्चायां मृगी तु वनिताऽन्तरे ॥ १६ ॥
युगो रथहलाद्यङ्गे न द्वयोस्तु कृतादिषु।
युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च ॥ १७ ॥
योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु।
वपुःस्थैर्ये प्रयोगे च विष्कम्भादिषु भेषजे ॥ १८ ॥
विश्रब्धघातके द्रव्योपायसन्नहनेष्वपि।
कार्मणेऽपि च रङ्गो ना रागे नृत्ये रणक्षितौ ॥ १९ ॥
अस्त्री त्रपुणि रागस्तु मात्सर्ये लोहितादिषु।
क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च ॥ २० ॥
रोगः कुष्ठौषधे व्याधौ लङ्गस्तु सङ्गपिङ्गयोः।

लिङ्गं चिन्हेऽनुमाने च साङ्ख्योक्तप्रकृतावपि ॥ २१ ॥
शिवमूर्तिविशेषेऽपि मेहनेऽपि नपुंसके ।
व्यङ्गो भेके च हीनाङ्गे वङ्गं सीसकरङ्गयोः ॥ २२ ॥
वार्त्ताके ऽपि च कार्पासे पुम्भूम्नि नीवृदन्तरे ।
वल्गुः स्याच्छगले पुंसि सुन्दरे चाभिधेयवत् ॥ २३ ॥
वेगो जवे प्रवाहे च महाकालफलेऽपि च ।
शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने ॥ २४ ॥
शुङ्गो वटाम्रातकयोः पर्कट्यामपि चास्त्रियाम् ।
शृङ्गं प्रभुत्वे शिखरे चिन्हे क्रीडाम्बुयन्त्रके ॥ २५ ॥
विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके ।
स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ ॥ २६ ॥
सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु ।

( गतृतीयम् । )

अयोगो विधुरे कूटे विश्लेषे कठिनोद्यमे ॥ २७ ॥
अनङ्गे मदने ऽनङ्गमाकाशमनसोरपि ।
अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च ॥ २८ ॥
आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि ।
आयोगो व्यापृतौ गन्धमाल्योपहारबोधयोः ॥ २९ ॥
आशुगो मारुते बाणेऽप्युद्वेगं क्रमुकीफले ।
उद्वेगो ऽप्युद्बाहुलकोद्वेजनोद्गमनेषु च ॥ ३० ॥
उत्सर्गः पुंसि सामान्ये न्याये च त्यागदानयोः ।
कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति ॥ ३१ ॥
न द्वयोः कौटजफले महिलायां तु योषिति ।
कालिङ्गो भूमिकर्कारौ दन्तावलभुजङ्गयोः ॥ ३२ ॥
कालिङ्गी राजकर्कट्यां चक्राङ्गो मानसौकसि ।

चक्राङ्गी कटुरोहिण्यां जिह्मगोऽहौ च मन्दगे ॥ ३३ ॥
तडागोऽस्त्री जलाधारविशेषे यन्त्रकूटके ।
तातगुः क्षुद्रताते ना जनकस्य हिते त्रिषु ॥ ३४ ॥
त्रिवर्गो धर्मकामार्थे त्रिफलायां कटुत्रिके ।
वृद्धिस्थानक्षये सत्त्वरजस्तमसि चेष्यते ॥ ३५ ॥
तुरगी चाश्वगन्धायां तुरगश्चित्तवाजिनोः ।
धाराङ्गोऽसौ च तीर्थे च नराङ्गस्तु वरण्डके ॥ ३६ ॥
मेहने न द्वयोश्चाथ नारङ्गः पिप्पलीरसे ।
यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च ॥ ३७ ॥
निषङ्गः सङ्गते तूणे निसर्गो रूपसर्गयोः ।
नीलगुः स्यात्कृमौ पुंसि भम्भराल्यां तु योषिति ॥ ३८ ॥
पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने ।
पन्नगश्चौषधीभेदे तथैव पन्नगाशने ॥ ३९ ॥
प्लवगो वानरे भेके सारथौ चोष्णदीधितेः ।
परागः सुमनोरेणौ धूलिस्नानीययोरपि ॥ ४० ॥
गिरिप्रभेदे विख्यातावुपरागे च चन्दने ।
प्रयागस्तीर्थभेदे स्याद्यज्ञे शतमखाश्वयोः ॥ ४१ ॥
प्रयोगः कर्मणोऽपि स्यात्प्रयुक्तौ च निदर्शने ।
पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः ॥ ४२
क्लीवं सुते प्रियङ्गुः स्त्री राजिकाकणयोरपि ।
फलिन्यां कङ्गुसस्ये च पुन्नागस्तु सितोत्पले ॥ ४३ ॥
जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे ।
वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि ॥ ४४ ॥
भुजङ्गो ऽहौ च पिङ्गे च मातङ्गः श्वपचे गजे ।
मृदङ्गः पटहे घोषे रक्ताङ्गस्तु महीसुते ॥ ४५ ॥

कम्पिल्ले स्त्री तु जीवन्त्यां क्लीबं विद्रुमधीरयोः ।
रथाङ्गं न द्वयोश्चक्रे ना चक्राङ्गविहङ्गमे ॥ ४६ ॥
वातिगः पुंसि भण्टाक्यान्धातुवादिनि चान्यवत् ।
विडङ्गस्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुन्नपुंसकम् ॥ ४७ ॥
विसर्गस्तु पुमान्दाने त्यागे च मलनिर्गमे ।
विसर्जनीयेऽप्ययनभेदे ऽपि च विभावसोः ॥ ४८ ॥
विहङ्गस्तु त्रिलिङ्गः स्यादाशुगे च विहङ्गमे ।
सर्वगं सलिले क्लीबं सर्वगः शङ्करे विभौ ॥ ४९ ॥
सम्भोगस्तु पुमान्भोगे सुरते जिनशासने ।
सारङ्गः पुंसि हरिणे चातके च मतङ्गजे ॥ ५० ॥
शबले त्रिषु हेमाङ्गो गरुडे परमेष्ठिनि ।

( गचतुर्थम् । )

स्यादपवर्गस्त्यागे मोक्षे कार्यावसानसाफल्ये ॥ ५१ ॥
अभिषङ्गो न पुंलिङ्गः पराभवाक्रोशशपथेषु ।
ईहामृगस्तु पुंसि स्यात्कोकरूपकभेदयोः ॥ ५२ ॥
उपरागस्तु पुंसि स्याद्राहुग्रस्तार्कचन्द्रयोः ।
दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते ॥ ५३ ॥
उपसर्गः पुमान्रोगभेदोपप्लवयोरपि ।
कटभङ्गस्तु शस्यानां हस्तच्छेदे नृपात्यये ॥ ५४ ॥
छत्रभङ्गोऽपि वैधव्ये स्वातन्त्र्यनृपनाशयोः ।
दीर्घाध्वगः पुमानुष्ट्रे लेख्यहारे तु मेघवत् ॥ ५५ ॥
मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि ।
समायोगस्तु संयोगे समवाये प्रयोजने ॥ ५६ ॥
सम्प्रयोगो रतेऽपि स्यादन्वितौ कार्मणेऽपि च ।

( गपञ्चमम् )

कथाप्रसङ्गो वातूले त्रिषवैद्ये च वाच्यवत् ॥ ५७ ॥
नाडीतरङ्गः काकोले हिण्डके रतहिण्डके ।

( इति गान्तवर्गः )

( घैकम् )

घो घण्टायां घर्घरे ना स्त्रियां तु काञ्चिघातयोः ।

( घद्वितीयम् )

अघं तु व्यसने दुःखे दुरिते च नपुंसकम् ॥ १ ॥
अर्घः पूजाविधौ मूल्ये ऽप्युद्घः स्याद्देहजानिले ।
अग्नौ हस्तपुटे शस्ते ऽप्योघो वेगे जलस्य च ॥ २ ॥
वृन्दे परम्परायां च द्रुतं नृत्योपदेशयोः ।
मघा मघी च नक्षत्रे धान्यभेदे यथाक्रमम् ॥ ३ ॥
मघो द्वीपान्तरे मेघो मुस्ताजलदयोः पुमान् ।
मोघा स्त्री पाटलायां स्याद्धीननिष्फलयोस्त्रिषु ॥ ४ ॥
लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम् ।
शीघ्रे च कृष्णागुरुणि पृक्कानामौषधौ तु स्त्री ॥ ५ ॥
श्लाघा स्त्रियां प्रशंसायां परिचर्याऽभिलाषयोः ।

( घतृतीयम् )

अनघो निर्मलापापमनोज्ञेष्वभिधेयवत् ॥ ६ ॥
अमोघः सफले वाच्यवत् स्त्री पथ्याविडङ्गयोः ।
उल्लाघोऽपि शुचौ कृष्णे दक्षनीरोगयोस्त्रिषु ॥ ७ ॥
काचिघः काञ्चनेऽपि स्याच्छेमण्डे मूपकेऽपि च ।
निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि ॥ ८ ॥
पलिघः काचकलशे घटे प्राकारगोपुरे ।

परिघो योगभेदे ऽस्त्रविशेषेऽर्गलघातयोः ॥ ९ ॥
प्रतिघः प्रतिघाते स्यात्क्रोधेऽपि परिकीर्त्तितः ।
महार्घस्तु महामूल्ये त्रिषु स्याल्लावके पुमान् ॥ १० ॥
सर्वौघो गुरुभेदे च सर्वसन्नहने पुमान् ।

( इति घान्तवर्गः )

( ङैकम् )

ङः पुमान्विषये ख्यातः स्पृहायां विषयस्य च ।

( इति ङान्तवर्गः )

( चैकम् )

चश्चण्डेशे पुमानुक्तः कच्छपे चन्द्रचौरयोः ।

( चद्वितीयम् )

अर्चा पूजाप्रतिमयोः कचः केशे गुरोः सुते ॥ १ ॥
बन्धे शुष्कव्रणे पुंसि करिण्यां तु कचा स्त्रियाम् ।
काचः शिक्ये मणौ नेत्रे रोगभेदे मृदन्तरे ॥ २ ॥
काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च ।
कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे ॥ ३ ॥
क्रौञ्चो द्वीपविशेषे स्यात्पक्षिपर्वतभेदयोः ।
चर्चा चिन्ताश्वासकयोश्चर्चिकायां तु योषिति ॥ ४ ॥
चञ्चा तु नलनिर्माणे तृणनिर्मितपूरुषे ।
चञ्चूस्त्रोट्यां स्त्रियां पुंसि गोनाडीके व्यडम्बके ॥ ५ ॥
त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः ।
न्यङ् नीचनिम्नयोर्नीचः पामरे वामनेऽपि च ॥ ६ ॥
प्राच्छब्दो दिशि देशे च काले च वाच्यलिङ्गकः ।

पिचुर्ना कुष्ठभेदे च कर्षे तूले सुरान्तरे ॥ ७ ॥
मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः।
रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः ॥ ८ ॥
रुक् स्त्री शोभाद्युतीच्छासु वचः कीरे वचौषधौ।
शारिकायां च वाग्वाचे भारत्यां वचने स्त्रियौ ॥ ९ ॥
वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखे द्वयोः।
शचीन्द्राण्यां शतावर्यां तथा स्त्रीकरणान्तरे ॥ १० ॥
शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि।
ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु ॥ ११ ॥
सूची तु सीवनद्रव्ये ऽप्याङ्गिकाभिनयान्तरे।

(चतृतीयम्।)

उदग्दिग्देशकालेषु वाच्यवत्त्रितयेऽव्ययम् ॥ १२ ॥
कणीची पुष्पितलतागुञ्जयोः शकटे स्त्रियाम्।
कवचो गर्दभाण्डे च सन्नाहे पटहेऽपि च ॥ १३ ॥
क्रकचः करपत्रेऽस्त्री ग्रन्थिलाख्यतरौ पुमान्।
नमुचिस्तु पुमान्दैत्यभेदे कुसुमकार्मुके ॥ १४ ॥
नाराच्ये षणिकायां ना लोहबाणाम्बुहस्तिनोः।
प्रपञ्चः सञ्चयेऽपि स्याद्विस्तारे च प्रतारणे ॥ १५ ॥
प्रत्यग्दिग्देशकालेषु वाच्यवत्त्रितयेऽव्ययम्।
मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम् ॥ १६ ॥
मारीचो रक्षसो भेदे कक्कोले याजकद्विजे।
मारीची देवताभेदे विपञ्ची केलिवीणयोः ॥ १७ ॥
विकचः क्षपणे केतौ नाऽकेशे स्फुटितेऽन्यवत्।
विरिञ्चिर्ना विरिञ्चश्च वैकुण्ठे परमेष्ठिनि ॥ १८ ॥
सङ्कोचो मीनभेदे स्यात् वधे क्लीबं तु कुङ्कुमे।

सम्यक् स्याद्वाच्यलिङ्गं तु मनोज्ञे सङ्गते ऽपि च ॥ १६ ॥

( चचतुर्थम् । )

जलसूचिः कङ्कत्रोटिमत्स्यशृङ्गाटयोरपि ।
शिशुमारे च पुंलिङ्गो जलौकायां तु योषिति ॥ २० ॥
मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान् ।

( चपञ्चमम् । )

रतनारीचो नारीणां सीत्कारे च शुनि स्मरे ॥ २१ ॥

( इति चान्तवर्गः । )

( छैकम् । )

छा छादने स्त्रियां ख्याता निर्मले ऽन्यवदिष्यते ।

( छद्वितीयम् । )

अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम् ॥ १ ॥
आभिमुख्येऽथ कच्छः स्यादनूपे तुन्नकद्रुमे ।
नौकाङ्गे पुंसि वाराह्यां चीरिकायां च योषिति ॥ २ ॥
स्याद् गुच्छः स्तवके स्तम्बे हारभेदकलापयोः ।
पिच्छा पूगच्छटाकोशमोचाशाल्मलिवेष्टके ॥ ३ ॥
भक्तसम्भूतमण्डे च पङ्क्तावश्वपदामये ।
स्त्रियां पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः ॥ ४ ॥
पुच्छः पश्चात्प्रदेशे स्याल्लाङ्गूले पुच्छमिष्यते ।
म्लेच्छः पामरभेदे च पापरक्तेऽपभाषणे ॥ ५ ॥

( छचतुर्थम् । )

महाकच्छस्तु पुंसि स्यात्समुद्रे च प्रचेतसि ।

( इति छान्तवर्गः । )

(जैकम्)

जो ना मृत्युञ्जये जन्यां तातमात्रे जनार्दने।
जूस्त्वरागमने प्रोक्ता सामान्यगमने स्त्रियाम् ॥ १ ॥
जूराकाशसरस्वत्यां पिशाच्यां जवने स्त्रियाम्।

(जद्वितीयम्)

अजश्छागे हरिब्रह्मविधुस्मरनृपे हरे ॥ २ ॥
अब्जोऽस्त्री शङ्खे ना विचुले धन्वन्तरौ च हिमकिरणे।
क्लीबं पद्मेऽथाजिः स्त्री समभूमौ च संग्रामे ॥ ३ ॥
ऊर्ज्जस्तु कार्त्तिकोत्साहबलेषु प्राणने ऽपि च।
कञ्जः केशे विरिञ्चे च कजं पीयूषपद्मयोः ॥ ४ ॥
कुजा कात्यायनीदेव्यां कुजो नरकभौमयोः।
कुब्जो वृक्षप्रभेदे ना न्युब्जे स्याद्वाच्यलिङ्गकः ॥ ५ ॥
कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि हस्तिनाम्।
खञ्जा छन्दःप्रभेदे स्त्री कुटिलाङ्घ्रौ तु वाच्यवत् ॥ ६ ॥
खजा मन्थे प्रहस्तेऽथ खर्जुः कीटान्तरे स्मृता।
खर्जूरीपादपे कण्ड्वां गजो माने मतङ्गजे ॥ ७ ॥
वास्तुनः स्थानभेदेऽपि गञ्जा खनौ सुराग्रहे।
गञ्जः स्यात्पुंसि रीढायां भाण्डागारे तु न स्त्रियाम् ॥ ८ ॥
गुञ्जा तु काकचिञ्चायां पटहे ऽथ कलध्वनौ।
द्विजः स्याद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना ॥ ९ ॥
द्विजा भार्ग्यां हरेणौ च ध्वजः स्याच्छौण्डिके पुमान्।
न स्त्रियां तु पताकायां खट्वाङ्गे मेढ्रचिन्हयोः ॥ १० ॥
निजं स्वीये च नित्ये च न्युब्जो दर्भमयस्रुचि।
कर्मरङ्गफले क्लीबं कुब्जाधोमुखयोस्त्रिषु ॥ ११ ॥
प्रजालोके च सन्ताने पिञ्जा तूलहरिद्रयोः।

बले क्लीबं वधे पुंसि व्याकुले त्रिष्वथो भुजा ॥ १२ ॥
द्वयोर्बाहौ करे मर्जूः स्त्री शुद्धौ पावकेऽपि च ।
रजो रणौ परागे स्यादार्तवे च गुणान्तरे ॥ १३ ॥
रज्जुर्वेण्यां गुणे योषिद्राजिः स्त्री पङ्क्तिलेखयोः ।
रुजा रोगे च भङ्गेऽथ लाजः स्यादार्द्रतण्डुले ॥ १४ ॥
नपुंसकमुशीरेऽथ स्त्रियां पुम्भूम्नि चाक्षते ।
व्रजो गोष्ठाध्ववृन्देषु वाजो निःस्वनपक्षयोः ॥ १५ ॥
वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु ।
व्याजः शाठ्येऽपदेशेऽथ बीजमङ्कुरकारणे ॥ १६ ॥
हेतुतत्त्वाधानशुक्रे लर्जुर्वणिजि विद्युति ।
स्त्रियां स्वञ्जो विधौ रुद्रे स्वजः प्रस्वेदपुत्रयोः ॥ १७ ॥
क्लीबं रक्तेऽथ सञ्जः स्यात् सन्नद्धे सम्भृते त्रिषु ।

( जतृतीयम् )

अण्डजा मृगनाभौ स्यात्सरटेऽहौ खगे झषे ॥ १८ ॥
अङ्गजं रुधिरे ऽनङ्गकेशपुत्रगदेषु ना ।
अम्बुजो निचुले पुंसि कमले तु नपुंसकम् ॥ १९ ॥
असृक् स्याद्योगभेदे ना रक्तेऽपि स्यान्नपुंसकम् ।
कम्बोजो हस्तिभेदेऽपि शङ्खदेशविशेषयोः ॥ २० ॥
करजं स्याद्व्याघ्रनखे करञ्जनखयोः पुमान् ।
कारुजः शिल्पिनां चित्रे वामलूरे गजार्भके ॥ २१ ॥
काम्बोजोऽश्वान्तरे सोमवल्के पुन्नागपादपे ।
काम्बोजी माषपर्ण्यां च वलक्षखदिरेऽस्त्रियाम् ॥ २२ ॥
कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि ।
गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे ॥ २३ ॥
लोहेऽपि गिरिजागौरीमातुलुङ्ग्योश्च योषिति ।

जलजं कमले शङ्खे नीरजं कुष्ठपद्मयोः ॥ २४ ॥
परञ्जस्तैलयन्त्रे स्याच्छुरिकाफलफेनयोः ।
वलजं गोपुरक्षेत्रे शस्यसङ्गरयोरपि ॥ २५ ॥
वलजा वरयोषायां यूथ्यामथ वणिक् स्त्रियाम् ।
वाणिज्यायां पुमान्वाणिज्यके च करणान्तरे ॥ २६ ॥
बाहुजः क्षत्रिये कीरे स्वयञ्जाततिलेऽपि च ।
भूमिजो नरकेऽङ्गारे सीतादेव्यां तु भूमिजा ॥ २७ ॥
वनजा मुद्गपर्ण्यां ना मुस्तके क्लीवमम्बुजे ।
सहजस्तु निसर्गे ना सहोत्थे पुनरन्यवत् ॥ २८ ॥
समजः पशुवृन्दे ना विपिने तु नपुंसकम् ।
सामजस्तु गजे पुंसि सामोत्थे पुनरन्यवत् ॥ २९ ॥
हिमजा तु शचीगौर्योः पुंसि मैनाकपर्वते ।

( जचतुर्थम् । )

अहिभुग् बर्हिणे तार्क्ष्ये पुंसि काश्मीरजं पुनः ॥ ३० ॥
कुष्टकुङ्कुमयोः क्लीबे ऽतिविषायां तु योषिति ।
क्षीराब्धिजं तु सामुद्रलवणे मौक्तिकेऽपि च ॥ ३१ ॥
पुमांस्तुषारकिरणे कमलायां तु योषिति ।
ग्रहराजो रवौ चन्द्रे जघन्यजः कनीयसि ॥ ३२ ॥
वृषले द्विजराजस्तु चन्द्रेऽनन्ते गरुत्मति ।
धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान् ॥ ३३ ॥
भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहङ्गमे ।
भारद्वाजा वनकार्पास्यां ना द्रोणऋषिभेदयोः ॥ ३४ ॥
अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे ।
यक्षराट् पुंसि धनदे मल्लानां रङ्गचत्वरे ॥ ३५ ॥
राजराजः कुबेरेऽपि सार्वभौमे सुधाकरे ।

( जपञ्चमम् )

ऋषभध्वज एषोऽपि शङ्करे चार्हदन्तरे ॥ ३६ ॥
मुनिभेषजसागस्त्यहरीतक्यां च लङ्घने ।

( इति जान्तवर्गः )

( झैकम् )

झो झण्टीशे सुरगुरौ दैत्यराजे ध्वनावपि ।

( झद्वितीयम् )

झञ्झावाते तारवायौ नष्टेऽपि कीर्त्यते बुधैः ॥ १ ॥
झञ्झा ध्वनिविशेषे च स्यादम्बुकणवर्षणे ।

( इति झान्तवर्गः )

( ञैकम् )

ञः पुमान्स्याद् बलीवर्दे शुके वाममतावपि ।

( ञद्वितीयम् )

ज्ञो ब्रह्मबुधविद्वत्सु स्यादज्ञो जडमूर्खयोः ॥ १ ॥
प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ च योषिति ।
राज्ञी राजप्रियायां च भार्यायां भास्करस्य च ॥ २ ॥
संज्ञा नाम्नि गायत्र्यां चेतना रवियोषितोः
अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति ॥ ३ ॥

( ञतृतीयम् । )

कृतज्ञः कुक्कुरे पुंसि मर्यादिन्यभिधेयवत् ।
क्षेत्रज्ञ आत्मनि च्छेके दैवज्ञो गणके पुमान् ॥ ४ ॥
दैवज्ञेक्षणिकायां स्त्री सर्वज्ञः शिवबुद्धयोः ।

( इति ञान्तवर्गः )

( टैकम् )

टः पुमान्वामने पादे निःस्वनेऽपि क्वचिन्मतः ।

( टद्वितीयम् )

अट्टं भक्ते च शुष्के ना क्षौमेऽत्यर्थे गृहान्तरे ॥ १ ॥
इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु ।
सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि ॥ २ ॥
इष्टिर्मताऽभिलाषेऽपि सङ्ग्रहश्लोकयागयोः ।
कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शिरे ॥ ३ ॥
समये गजगण्डे च पिप्पल्यां तु कटी मता ।
कटु स्त्री कटुरोहिण्यां लताराजिकयोरपि ॥ ४ ॥
नपुंसकमकार्ये स्यात्पुंलिङ्गे रसमात्रके ।
त्रिषु तद्वत्सुगन्धयोश्च मत्सरेऽपि खरेऽपि च ॥ ५ ॥
कष्टं तु गहने कृच्छ्रे क्रुष्टं रोदनरावयोः ।
कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे ॥ ६ ॥
कुटी स्यात्कुम्भदास्यां च मुरायां चित्रगुच्छके ।
कूटोऽस्त्री निश्चलं राशौ लोहमुद्गरदम्भयोः ॥ ७ ॥
मायाद्रिशृङ्गयोस्तुच्छे सीरावयवयन्त्रयोः ।
अनृते चाथ कृष्टिः स्यादाकर्षे स्त्री बुधे पुमान् ॥ ८ ॥
कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः ।
खटोऽन्धकूपकफयोः प्रहारान्तरटङ्कयोः ॥ ९ ॥
खाटिस्त्वसद्ग्रहेऽपि स्यात्किणे शवरथे स्त्रियाम् ।
खेटः कफे ग्रामभेदे चर्मण्यस्त्र्यधमे त्रिषु ॥ १० ॥
अथ गृष्टिः सकृत्सूतगवीवदरयोः स्त्रियाम् ।
घटः समाधिभेदेभशिरःकूटकुटेषु च ॥ ११ ॥
घटा घटनगोष्ठीभघटनासु च योषिति ।

घृष्टिः स्त्री घर्षणस्पर्द्धाविष्णुक्रान्तासु ना किरौ ॥ १२ ॥
घोण्टा तु बदरीपूगवृक्षयोरपि योषिति ।
चटुश्चाटौ पिचिण्डे च व्रतिनामासने पुमान् ॥ १३ ॥
जटालग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी ।
जुष्टं तु क्लीबमुच्छिष्टे सेविते वाच्यलिङ्गकम् ॥ १४ ॥
झाटो निकुञ्जे कान्तारे व्रणादीनां च मार्जने ।
तटं नपुंसकं क्षेत्रे प्रतीरे तु तटी त्रिषु ॥ १५ ॥
त्वष्टा पुमान्देवशिल्पतक्ष्णोरादित्यभिद्यपि ।
त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः ॥ १६ ॥
त्रोटिः स्त्री कट्फले चञ्च्वां खगे मीनान्तरेऽपि च ।
दिष्टं दैवे पुमान्काले दिष्टिर्मुत्परिमाणयोः ॥ १७ ॥
स्त्रियां दृष्टिः स्त्रियां बुद्धौ लोचने दर्शनेऽपि च ।
धटो दिव्यतुलायां स्याद्धटी चीरे च वाससः ॥ १८ ॥
नटी नल्यौषधे स्त्री स्यात् शैलूषाशोकयोः पुमान् ।
पटश्चित्रपटे वस्त्रेऽस्त्री प्रियालद्रुमे पुमान् ॥ १९ ॥
पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् ।
पटोले तु पुमान् क्लीबे छत्रालवणयोरपि ॥ २० ॥
पट्टः पेषणपाषाणे व्रणादीनां च बन्धने ।
चतुष्पथे च राजादिशासनान्तरपीठयोः ॥ २१ ॥
पटिः स्त्री पटभेदे स्याद्वागुलौ कुम्भिकाद्रुमे ।
पुष्टिः स्त्री पोषणे वृद्धौ फटा तु फणदन्तयोः ॥ २२ ॥
वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः ।
भटः स्यात्पुंसि वीरे च विशेषे पामरस्य च ॥ २३ ॥
भृष्टिः स्याद्भर्जने शून्यवाटिकायां च योषिति ।
म्लिष्टं त्रिष्वव्यक्तवाचि म्लाने मुष्टिर्द्वयोः फले ॥ २४ ॥

बद्धपाणौ त्सरौ यष्टिः पुंसि स्याद् भुजदण्डके ।
द्वयोर्हारलताभार्ग्यो मधुकाशस्त्रभेदयोः ॥ २५ ॥
रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले ।
रिष्टिः खड्गे ना शुभे स्त्री लाटो देशान्तरेऽशुके ॥ २६ ॥
वाटो मार्गे वृतिस्थाने स्यात्कुटीवास्तुनोः स्त्रियाम् ।
विटोऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च ॥ २७ ॥
विष्टिस्त्रिषु कर्मकरे स्त्रथाजूत्रेतनकर्मसु ।
व्युष्टिः फले समृद्धौ स्त्री व्युष्टं कल्ये त्रिषूषिते ॥ २८ ॥
सटा जटाकेसरयोः स्फुटो व्यक्तप्रफुल्लयोः ।
व्याप्ते त्रिषु स्फुटिर्योषित्पादस्फोटामयेऽपि च ॥ २९ ॥
निर्भिन्नकर्कटीशस्येऽपि स्यात्स्पष्टं तु निर्मिते ।
इत्युक्तनिश्चितयोः प्राज्ये त्रिषु सृष्टिस्तु निर्मितौ ॥ ३० ॥
स्वभावे चापि कथिता हृष्टो रोमाञ्चितेऽपि च ।
जातहर्षे प्रहसिते विस्मिते ऽप्यभिधेयवत् ॥ ३१ ॥

( टतृतीयम् )

अवटः स्यात्खिले गर्ते कूपे कुहकजीविनि ।
अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः ॥ ३२ ॥
अरिष्टमशुभे तक्रे सूतिकागार आसवे ।
शुभे मरणचिन्हे चादिष्टमादेशिते त्रिषु ॥ ३३ ॥
आज्ञप्तोच्छिष्टयोः क्लीबमुत्कटस्तीव्रमत्तयोः ।
उद्भटः कच्छपे शूर्पे कर्कटो विहगान्तरे ॥ ३४ ॥
राशिभेदे कुलीरे च वालूक्यां शाल्मलीफले ।
कर्दटः करहाटे स्यात् पङ्कपङ्कारयोरपि ॥ ३५ ॥
करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने ।
एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे ॥ ३६ ॥

करटो वाद्यभेदे ऽथ कार्पटो जन्तुकार्पिणोः ।
कीकटः कृपणे निःस्वे त्रिषु पुम्भूम्नि नीवृति ॥ ३७ ॥
कुरुण्टो दारुपुत्र्यां ना झिण्टीम्लानप्रभेदयोः ।
कुक्कुट्यनृतचर्यायां पुंसि स्याच्चरणायुधे ॥ ३८ ॥
निषादशूद्रयोः पुत्रे तृणोल्कायां च कुक्कुभे ।
कुनटी मनःशिलायां नैपाल्यामपि योषिति ॥ ३९ ॥
कूपीटमुदरे तोये केशटो हर्यजोत्कटे ।
चर्पटः स्फारविपुले चपेटे पर्पटेऽपि च ॥ ४० ॥
चक्राटो विषवैद्येऽपि धूर्तदीनारयोरपि ।
चिपिटः खाद्यभेदे ना त्रिषु पिट्टितविस्तृते ॥ ४१ ॥
चिरन्टी तु सुवासिन्यां स्याद् द्वितीयवयः स्त्रियाम् ।
जकुटं वार्त्ताकुपुष्पे जकुटो मलये शुनि ॥ ४२ ॥
ऽप्यङ्कुटं शिक्यभेदेऽपि धौताञ्जन्यां च न द्वयोः ।
त्रिकूटं सिन्धुलवणे त्रिकूटः पर्वतान्तरे ॥ ४३ ॥
त्रिपुटा मल्लिकायां च सूक्ष्मैलात्रिवृतोः स्त्रियाम् ।
सतीनके च तीरे च त्रिपुटः समुदाहृतः ॥ ४४ ॥
द्रोहाटः कथितो गाथाप्रभेदे मृगलुब्धके ।
वैडालव्रतिके चाऽथ धाराटश्चातकाश्वयोः ॥ ४५ ॥
निर्दटस्तु दयाशून्ये कथितो निष्प्रयोजने ।
परापवादरक्ते च वाच्यलिङ्गोऽयमिष्यते ॥ ४६ ॥
निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयोः ।
पर्कटी नूतनफले पूगादेः प्लक्षपादपे ॥ ४७ ॥
परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रियाम् ।
पर्पटं पिष्टभेदे स्यात्पर्पटो भेषजान्तरे ॥ ४८ ॥
पात्रटः कर्परे पुंसि देशे स्यादभिधेयवत् ।

पिच्चटो नेत्ररोगे स्यात्क्लीबं सीसकरङ्गयोः ॥ ४६ ॥
वरटा द्वयोर्वरटयां स्त्री हंस्यां च तत्पतौ पुमान् ।
बर्बटी पण्ययोषायां व्रीहिभेदे च योषिति ॥ ५० ॥
वेकटः स्याद्वैकटिके मत्स्यभेदे च यूनि च ।
भावाटो भावके साधुनिवेशे कामुके नटे ॥ ५१ ॥
भाकूटः शैलभषयोर्भेदे स्यादथ मर्कटी ।
करञ्जभिच्छूकशिम्ब्योः पुंसि वानरलूतयोः ॥ ५२ ॥
मोचाटः कृष्णजीरे च रम्भास्थ्नि मलयोद्भवे ।
मोरटं तु भवेदिक्षुमूलाङ्कोठप्रसूनयोः ॥ ५३ ॥
सप्तरात्रात्परक्षीरे मूर्विकायां तु मोरटा ।
वर्णाटो गायने चित्रकरे स्त्री कृतजीवने ॥ ५४ ॥
विकटा वज्रवाराह्यां त्रिपूरुविकरालयोः ।
शाकटं शकटस्येदमित्यर्थे तस्य वोढरि ॥ २५ ॥
शैलाटो देवले सिंहे शुक्लकाचकिरातयोः ।
संमृष्टं त्रिषु संसर्गे संशुद्धे वसनादिना ॥ ५६ ॥

( टचतुर्थम् । )

उच्चिङ्गटस्तृणगडमत्स्ये कोपनपूरुषे ।
करहाटः शिफाकन्दे पद्मस्य मदनद्रुमे ॥ ५७ ॥
स्यात्कार्पटः कृपणोन्मत्तानर्थकरेषु च ।
कामकूटस्तु वेश्यायाः प्रियविभ्रमयोः पुमान् ॥ ५८ ॥
कुटन्नटं तु कैवर्ते मुस्तके पुंसि शोणके ।
कुण्डकीटस्तु चार्वाकवचनाभिज्ञपूरुषे ॥ ५९ ॥
पतितब्राह्मणीपुत्रदासीकामुकयोरपि ।
खड्गारीटस्तु फलकासिधाराव्रतधारिणोः ॥ ६० ॥
गाढमुष्टिः कृपाणे ना कृपणे त्वभिधेयवत् ।

चक्रवाटः क्रियारोहे पर्य्यन्ते च शिखातरौ ॥ ६१ ॥
चतुःषष्टिः कलासंख्याभेदयोर्वह्वृचि स्त्रियाम् ।
नारकीटोऽश्मकीटे स्यात्स्वदत्ताशाविहन्तरि ॥ ६२ ॥
परपुष्टः परभृते वारनार्यां तु योषिति ।
प्रतिकृष्टं मतं गुह्ये द्विरावृत्त्या च कर्षिते ॥ ६३ ॥
प्रतिसृष्टः प्रेषिते स्यात्प्रत्याख्याते च वाच्यवत् ।
वर्कराटो कटाक्षे स्यात्तरुणादित्यरोचिषि ॥ ६४ ॥
नारीपयोधरोत्सङ्गकान्तदन्तनखक्षते ।
शिपिविष्टस्तु खलतौ शिवे दुश्चर्मणि स्मृतः ॥ ६५ ॥
अथ श्रुतिकटः प्रायश्चित्ते ऽहौ पापशोधने ।

( टपञ्चमम् । )

दशनोच्छिष्टः पुंसि स्यान्निश्वासाधरचुम्बयोः ॥ ६६ ॥

## ( इति टान्तवर्गः । )

( ठैकम् । )

ठो मण्डले चन्द्रबिम्बे शून्ये च लोकगोचरे ।

( ठद्वितीयम् । )

कठो मुनौ तदाख्यातवेदाध्येतृज्ञयोःस्वरे ॥ १ ॥
कण्ठो गले सन्निधाने ध्वनौ मदनपादपे ।
काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः ॥ २ ॥
स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम् ।
कुष्ठं रोगे पुष्करेऽस्त्री कुण्ठो कर्मण्यमूर्खयोः ॥ ३ ॥
कोष्ठः कुसूले चात्मीये मध्ये कुक्षौ गृहस्य च ।
गोष्ठं गोस्थानके गोष्ठी सभासंलापयोः स्त्रियाम् ॥ ४ ॥
ज्येष्ठः श्रेष्ठेऽतिवृद्धे च त्रिषु मासान्तरे पुमान् ।

ज्येष्ठा तु गृहगोधाऽऽख्यजतुनक्षत्रभेदयोः ॥ ५ ॥
निष्ठा निष्पत्तिनाशान्तयाञ्चानिर्वहणेषु च ।
प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालिकौषधौ ॥ ६ ॥
पाठश्च पठने ख्याते विद्धपर्ण्यां तु योषिति ॥
पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे ॥ ७ ॥
षण्ठः स्यादकृतोद्वाहे खर्वे कुन्तायुधेऽपिच ।
शठो मध्यस्थपुरुषे धूर्त्तधत्तूरयोरपि ॥ ८ ॥
श्रेष्ठो वरे कुबेरे च शोठो मूर्खेऽलसेऽपि च ।
षष्ठी कात्यायनीतिथ्योस्त्रिषु षण्णां च पूरणे ॥ ९ ॥
हठः स्यात्प्रसभे पृश्न्यां हेठो बाधाविहेठयोः ।

( ठतृतीयम् )

अपष्ठु पुंसि काले च वामे स्यादन्यलिङ्गकः ॥ १० ॥
अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च ।
अम्बष्ठा चाम्ललोण्यां स्यात्पाठायूथिकयोरपि ॥ ११ ॥
कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम् ।
कनिष्ठोऽतियुवाऽत्यल्पानुजे स्त्री दुर्बलाङ्गुलौ ॥ १२ ॥
जरठः कर्कशे पाण्डौ कठिणेऽप्यभिधेयवत् ।
नर्मठश्चिबुके षिड्गे प्रतिष्ठागौरवे क्षितौ ॥ १३ ॥
स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः ।
प्रकोष्ठो मणिमन्धस्य कूर्परस्यान्तरेऽपि च ॥ १४ ॥
भूपकक्षाऽन्तरेऽपि स्याद्वरिष्ठं मरिचेऽपि च ।
ताम्रे क्लीबं तित्तिरौ ना वरोरुत्तमयोस्त्रिषु ॥ १५ ॥
मकुष्ठो व्रीहिभेदे ना मन्थरे पुनरन्यवत् ।
लघिष्ठोऽत्यल्पके भेले वैकुण्ठः कृष्णशक्रयोः ॥ १६ ॥
श्रीकण्ठो देशभित्युग्रे साधिष्ठोऽतिदृढार्ययोः ।

( ठचतुर्थम् । )

कलकण्ठः कलध्वाने हंसे पारावते पिके ॥ १७ ॥
कालकण्ठश्च दात्यूहे कलविङ्के च खञ्जने ।
मयूरे पीतशाले च स्यात्खण्डपरशौ पुमान् ॥ १८ ॥
कालपृष्ठं कर्णचापे पुंसि कङ्कविहङ्गमे ।
स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके ॥ १९ ॥
नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यां तु योषिति ।
पूतिकाष्ठं च सरलदेवदारुमहीरुहोः ॥ २० ॥
सूत्रकण्ठः पुमान्विप्रे खञ्जरीटकपोतयोः ।
हारिकण्ठः पिके पुंसि हारान्वितगले त्रिषु ॥ २१ ॥

( इति ठान्तवर्गः । )

( डैकम् )

डः पुमान्वाडवाग्नौ स्याड्डाकिन्यां स्त्री निगद्यते ।

( डद्वितीयम् )

अण्डं मुष्के च पेश्यां स्यादिडा तु बुधयोषिति ॥ १ ॥
सौरभेय्यां च वचने वसुमत्यामपि स्त्रियाम् ।
काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः ॥ २ ॥
कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम् ।
क्रीडा केलिप्रकारे स्यात्खलावज्ञानयोरपि ॥ ३ ॥
कुण्डमग्न्यालये मानभेदे देवजलाशये ।
कुण्डी कमण्डलौ जारात् पतिवत्नीसुते पुमान् ॥ ४ ॥
पिठरे तु न ना क्ष्वेडो ध्वनौ कर्णामये त्रिषु ।
क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति ॥ ५ ॥
लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् ।

दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्त्तितः ॥ ६ ॥
क्रोडः शनौ सूकरे ना न पुमानङ्करक्षसोः ।
खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः ॥ ७ ॥
खण्डः पानान्तरे भेदे गण्डः स्यात्पुंसि खड्गिनि ।
ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च ॥ ८ ॥
चिन्हवीरकपोलेषु हयभूषणबुद्बुदे ।
गडुः पृष्ठगुडे कुब्जे गडो मीनान्तराययोः ॥ ९ ॥
गुडः स्याद् गोलके हस्तिसन्नाहेक्षुविकारयोः ।
गुडा स्नुह्यां च कथिता गुडिकायां च योषिति ॥ १० ॥
गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति ।
चण्डो ना तिन्तिडीवृक्षे यमकिङ्करदैत्ययोः ॥ ११ ॥
चण्डा धनहरीशङ्खपुष्प्योस्त्रिष्वतिकोपने ।
चण्डी कात्यायनीदेव्यां हिंस्रकोपनयोषितोः ॥ १२ ॥
तीव्रेऽपि चूडा वडभौ शिखायां बाहुभूषणे ।
चोडः प्रावरणे भूम्नि देशभेदे जडा स्त्रियाम् ॥ १३ ॥
शूकशिम्ब्यां हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु ।
ताण्डस्तु ताडने घोषे मुष्टिमेयतृणादिषु ॥ १४ ॥
ताडो यवद्रुमे चाथ दण्डोऽस्त्री लगुडे पुमान् ।
व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ॥ १५ ॥
सैन्ये काले मानभेदे चण्डांशोः पारिपार्श्विके ।
दमे यमेऽभिमाने च नाडी नाले व्रणान्तरे ॥ १६ ॥
शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च ।
तथा षट्क्षणकालेऽपि नीडं स्थानकुलाययोः ॥ १७ ॥
षण्डः षण्डे धियि स्त्री स्यात्पाण्डुर्ना नृपतौ सिते ।
पिण्डो बाले बले सान्द्रे देहागारैकदेशयोः ॥ १८ ॥

देहमात्रे निकाये च गोलसिल्हकयोरपि ।
ओड्रपुष्पे च पुंसि स्यात्क्लीबमाजीवनायसोः ॥ १९ ॥
पिण्डा तु पिण्डीतगरे ऽलाबुखर्जूरभेदयोः ।
पीडा कृपाशिरोमालाऽपमर्दसरलद्रुषु ॥ २० ॥
भाण्डं पात्रे वणिङ्मूलधने भूषाऽश्वभूषयोः ।
मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि ॥ २१ ॥
आमलक्यां स्त्रियां मण्डाऽथास्त्रियां सारपिच्छयोः ।
मुण्डो दैत्यान्तरे राहुग्रहे ना मुण्डिते त्रिषु ॥ २२ ॥
मुण्डा मुण्डीरिकायां स्यात्स्त्रियामस्त्री तु मूर्द्धनि ।
रण्डा मूषिकपर्ण्यां च विधवायां च योषिति ॥ २३ ॥
रोडः क्षोदे भवेत्पुंसि तृप्ते तु वाच्यलिङ्गकः ।
रण्डा तु पांसुलायां स्त्री त्रिषु हस्तादिवर्ज्जिते ॥ २४ ॥
व्याडो हिंस्रपशौ सर्पे शुण्डा पानगृहे मता ।
अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च ॥ २५ ॥
शौण्डो मत्ते च विख्यातः पिप्पल्यां च भवेत्स्त्रियाम् ।
षण्डं पद्मादिसङ्घाते न स्त्री स्याद् गोपतौ पुमान् ॥ २६ ॥
करण्डो मधुकोशासिकारण्डेषु दलाढके ।
कूष्माण्डुयमायां स्त्री पुंसि कर्कारौ च गणान्तरे ॥ २७ ॥
भ्रूणान्तरेऽथ कोदण्डं चापे ना नीवृदन्तरे ।
भ्रुव्यथो गरुडं क्ष्वेडमन्त्रे मरकतेऽपि च ॥ २८ ॥
तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवे ।
नौकायामपि न स्त्री स्यात्तित्तडीडिम्बचिञ्चयोः ॥ २९ ॥
द्राविडो देशभिज्जाते संख्याभिद्वेदमुख्ययोः ।
निर्गुडी नीलशेफाल्यां सिन्धुवारद्रुमेऽपि च ॥ ३० ॥
प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि ।

प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तरोः ॥ ३१ ॥
शस्ते पिचण्ड उदरे पशोरवयवे पुमान्।
पूसण्डो गन्धकीटेऽपि तथा जन्त्वन्तरे पुमान् ॥ ३२ ॥
वरण्डोऽप्यन्तरे वेदीसमूहमुखरोगयोः।
वारुण्डो द्वारपिण्ड्यां स्त्री फणीनां राजके पुमान् ॥ ३३ ॥
न स्त्रियां सेकपात्रे च मलेऽक्ष्णः श्रवणस्य च।
भेरुण्डा देवताभेदपक्षिण्यन्तरयोः स्त्रियाम् ॥ ३४ ॥
भयानके वाच्यवत्स्यान्मार्त्तण्डः क्रोडसूर्ययोः।
मारुण्डोऽण्डे भुजङ्गीनां मार्गे गोमयमण्डले ॥ ३५ ॥
वरण्डा सारिकावर्त्तिशास्त्रभेदे च योषिति।
वितण्डा वादभेदे स्यात्कच्चीशाके शिलाह्वये ॥ ३६ ॥
करवीर्यामपि स्त्री स्याच्छिखण्डो बर्हचूडयोः।
शरण्डस्तु पुमान्धूर्त्ते शरठे भूषणान्तरे ॥ ३७ ॥

(डचतुर्थम्।)

अपोगण्डस्तु वलिभे विकलाङ्गे शिशावपि।
अतिगण्डो योगभेदे बृहद्गण्डे तु वाच्यवत् ॥ ३८ ॥
चक्रवाडोऽद्रिभेदे स्याच्चक्रवाडं तु मण्डले।
जलरुण्डो जलावर्त्ते पयोरेणौ भुजङ्गमे ॥ ३९ ॥
द्वेवताडः सैंहिकेये जीमूते च हुताशने।
अथवा तहुडा वात्याराजशोणितयोरपि ॥ ४० ॥
पिच्छिलस्फोटिकायां च वामायामपि योषिति।

## (इति डान्तवर्गः)

(ढैकम्।)

ढो ढक्कायां पुमानुक्तः शुनि तस्य च लाङ्गुले।

( ढद्वितीयम् । )

गूढं रहसि गुप्ते च न द्वयोः संवृते त्रिषु ॥ १ ॥
दृढं स्थूले नितान्ते च प्रगाढबलवत्यपि ।
गाढिः स्त्री पत्रपङ्क्तौ च दैन्यस्यापि प्रकाशने ॥ २ ॥
मूढस्तु तन्द्रिते बाले राढा स्त्री शुम्भशोभयोः ।
रूढं जाते प्रसिद्धे च बाढं दृढप्रतिज्ञयोः ॥ ३ ॥
व्यूढः संहतविन्यस्तपृथुलेष्वभिधेयवत् ।
वोढा ना भारिके सूते शण्ढः स्यात्पुंसि गोपतौ ॥ ४ ॥
आकृष्टोऽण्डे वर्षवरे तृतीयाप्रकृतावपि ।
षोढा तितिक्षासंयुक्ते शक्ते चाप्यभिधेयवत् ॥ ५ ॥

( ढतृतीयम् । )

अध्यूढा कृतसापत्न्यनार्यामध्यूढ ईश्वरे ।
आषाढो व्रतिनां दण्डे मासे मलयपर्वते ॥ ६ ॥
स्त्री पूर्णिमायामालीढं पादन्यासेऽशिते त्रिषु ।
उदूढमूढे स्थूले स्यादुपोढो निकटोढयोः ॥ ७ ॥
प्रगाढः कृच्छ्रदृढयोः प्रमीढो मूत्रिते घने ।
प्ररूढो जठरे बद्धमूले वारूढ इत्ययम् ॥ ८ ॥
वस्त्राञ्चले कपाटेऽग्नौ पञ्जरे शम्बलेऽपि च ।
विरूढो ऽङ्कुरिते जाते विगूढो गर्हितेऽपि च ॥ ९ ॥
गुप्ते ऽपि त्रिषु संरूढः प्रौढे चाङ्कुरिते त्रिषु ।
समूढः पुञ्जिते भुग्ने सद्योजाते ऽनुपप्लुते ॥ १० ॥

( ढचतुर्थम् । )

अध्यारूढं समारूढेऽभ्यधिके चाभिधेयवत् ।
खट्वाऽऽरूढः श्रिते खट्वामविनीते च वाच्यवत् ॥ ११ ॥
प्रत्यालीढं तु चरणन्यासभेदे शिते त्रिषु ।

( इति ढान्तवर्गः )

( णैकम् । )

णः पुमान्बिन्दुदेवे स्याद् भूषणे गुणवर्जिते ।
पानीयनिलयेऽपीति केचिदूचुर्विपश्चितः ॥ १ ॥

( णद्वितीयम् )

अणुर्व्रीहिविशेषे स्यात्पुंसि सूक्ष्मेऽभिधेयवत् ।
आणिराणिवदक्षाग्रकीलाश्रिसीमसु द्वयोः ॥ २ ॥
उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः ।
ऊर्णा मेषादिलोम्नि स्यादन्तरावर्तके भ्रुवोः ॥ ३ ॥
कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि ।
क्षणः पर्वोत्सवव्यापारेषु मानेऽप्यनेहसः ॥ ४ ॥
कणा जीरककुम्भीरमक्षिकापिप्पलीषु च ।
कणोऽतिसूक्ष्मे धान्यांशे काणः काकैकचक्षुषोः ॥ ५ ॥
कीर्णं दत्ते च विक्षिप्ते हिंसितेऽप्यभिधेयवत् ।
कुणिस्तुन्नकवृक्षे ना कुकरे त्वभिधेयवत् ॥ ६ ॥
कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने ।
कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति ॥ ७ ॥
मेचके वाच्यलिङ्गं स्यात् क्लीबे मरिचलोहयोः ।
कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने ॥ ८ ॥
एकदेशे गृहादीनामश्रौ च लगुडेऽपि च ।
गणः प्रमथसंख्यौघे चण्डासैन्यप्रभेदयोः ॥ ९ ॥
गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ।
त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु ॥ १० ॥
शुक्लादावपि वर्ष्यां च गेष्णुर्ना गायने नटे ।
घ्राणं क्लीबं नासिकायां घ्राते स्याद्वाच्यलिङ्गकम् ॥११॥

घृणा जुगुप्साकृपयोरथ चूर्णाकपर्दके ।
चूर्णो धूलौ क्षारभेदे चूर्णानित्रासयुक्तिषु ॥ १२ ॥
जर्णुश्चन्द्रे च वृक्षे च जिष्णुर्ना वासवेऽर्जुने ।
जित्वरे वाच्यवज्जीर्णं परिपक्वपुराणयोः ॥ १३ ॥
तृणिः क्रमुकभेदेऽपि दुष्टदैत्रश्रुतौ स्त्रियाम् ।
त्राणं तु त्रायमाणायां रक्षणे रक्षिते त्रिषु ॥ १४ ॥
तीक्ष्णं सामुद्रलवणे त्रिषलोहाजिमुष्कके ।
क्लीबं जवाग्रजे पुंसि तिग्मात्मत्यागिनोः त्रिषु ॥ १५ ॥
तूणी नील्यां निषङ्गे ना तृष्णा स्यात्तर्षलिप्सयोः ।
दीर्णं विदारिते भीते द्रुणं चापेऽलिनि द्रुणः ॥ १६ ॥
द्रुण्यं द्रुद्रोणीकच्छप्योर्दैष्णुर्दातरि दुर्गमे ।
द्रोणोऽस्त्रियामाढके स्यादाढवापचतुष्टये ॥ १७ ॥
पुमान्कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे ।
तथा काष्ठाम्बुवाहिन्यां गवादीनामपीष्यते ॥ १८ ॥
पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्रहे ।
क्रय्यशाकाद्विकाद्यूतव्यवहारे भृतौ धने ॥ १९ ॥
पर्णं पत्रे किंशुके ना पार्ष्णिः स्यादुन्मदास्त्रियाम् ।
स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च ॥ २० ॥
प्राणो हृन्मारुते बाले काव्यजीवेऽनिलेऽबले ।
पुंलिङ्गः पूरिते वाच्यलिङ्गः पुम्भूम्नि चासुषु ॥ २१ ॥
पूर्णं शक्ते समग्रे ना पूरिते त्वभिधेयवत् ।
फाणिर्गुडे करम्बे च स्त्रियां वाणी तु योषिति ॥ २२ ॥
व्यूतावपि सरस्वत्यां भ्रूणः स्त्री गर्भडिम्भयोः ।
मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च ॥ २३ ॥
कण्ठदेशे स्तने जायालिङ्गाग्रेऽलिञ्जरेऽपि च ।

मोणः शुष्कफले नक्रमक्षिकाऽहिकरण्डयोः ॥ २४ ॥
रणः कोणे क्वणे पुंसि समरे पुंनपुंसकम् ।
रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः ॥ २५ ॥
वर्णो द्विजादिशुक्लादियशोगुणकथासु च ।
स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने ॥ २६ ॥
वाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः ।
वाणा तु बाणमूले स्त्री नीलझिन्ट्यां पुनर्द्वयोः ॥ २७ ॥
वीणा विद्युति वल्लक्यां वृष्णिः पाण्डवचन्द्रयोः
त्रिषु ना यादवे मेषे वेणी केशस्य बन्धने ॥ २८ ॥
नद्यादेरन्तरे देवताले वेणुर्नृपान्तरे ।
त्वक्सारेऽपि च पुंसि स्याच्छाणो मासचतुष्टये ॥ २९ ॥
लोहादीनां च निकषे शाणो प्रावरणान्तरे ।
श्राणं पक्के यवाग्वां स्त्री शीर्णं तनुविशीर्णयोः ॥ ३० ॥
श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समानशिल्पिसंहतौ ।
शोणः कृशानौ श्योनाके लोहिताश्वे नदे पुमान् ॥ ३१ ॥
त्रिषु कोकनदच्छाये स्थाणुः कीले हरे पुमान् ।
अस्त्री ध्रुवेऽथ स्थूणा स्यात्सूर्म्यां स्तम्भे गृहस्य च ॥३२॥

( णतृतीयम् । )

अरुणोऽव्यक्तरागे ऽर्के सन्ध्यारागेऽर्कसारथौ ।
निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥ ३३ ॥
अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च ।
अरणिर्वह्निमन्थे ना द्वयोर्निर्मथ्यदारुणि ॥ ३४ ॥
अभीक्ष्णं तु भृशे नित्यतद्युक्तक्रिययोस्त्रिषु ।
इन्द्राणी करणे स्त्रीणां पौलोमीसिन्धुवारयोः ॥ ३५ ॥
ईरिणं तूषरे शून्येऽपीक्षणं दर्शने दृशि ।

ऊषणं मरिचे क्लीबङ्कणायामूषणा स्त्रियाम् ॥ ३६ ॥
एषणी व्रणमार्गानुसारिण्यां च तुलाभिदि ।
करुणस्तु रसे वृक्षे कृपायां करुणा मता ॥ ३७ ॥
कत्तृणं तृणभित्पृश्न्योः करणं हेतुकर्मणोः ।
वणिजादौ हस्तलेपे नृत्यगीतप्रभेदयोः ॥ ३८ ॥
क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च ।
कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते ॥ ३९ ॥
कल्याणमक्षयस्वर्गे मङ्गलेऽपि नपुंसकम् ।
कङ्कणं करभूषायां सूत्रमण्डनयोरपि ॥ ४० ॥
करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे ।
कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च ॥ ४१ ॥
काकिणी पणतुर्यांशे मानदण्डे च दृश्यते ।
कृष्णलैकवराट्योः स्यादुन्मानस्यांशकेऽपि च ॥ ४२ ॥
कारणं करणे हेतुवधयोश्च नपुंसकम् ।
स्त्री यातनायां कुर्वाणो भृत्यकारकयोस्त्रिषु ॥ ४३ ॥
कृपाणः खड्गे च्छुरिकाकर्त्तर्योरपि योषिति ।
कृपणस्तु कृमौ पुंसि मन्दकुत्सितयोस्त्रिषु ॥ ४४ ॥
क्षेपणं प्रेरणे नौकादण्डजालभिदोः स्त्रियाम् ।
ग्रहणं स्त्रीकारादरकरोपरागोपलब्धिवन्दिषु ॥ ४५ ॥
स्याद् ग्रामणीः प्रधानेऽधिपतौ त्रिषु नापिते पुंसि ।
ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत् ॥ ४६ ॥
गोकर्णोऽश्वतरे सर्पसारङ्गे च गणान्तरे ।
अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ ॥ ४७ ॥
चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च ।
भ्रमणे भक्षणे चापि नपुंसक उदाहृतः ॥ ४८ ॥

जरणं जीरकेऽजाजीहिङ्गुसौवर्चलेऽपि च।
तरुणं कुब्जपुष्पे ना रुबुके यूनि तु त्रिषु ॥ ४९ ॥
तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्।
दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्त्तिषु ॥ ५० ॥
आरामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्।
द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे ॥ ५१ ॥
दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे।
द्रुघणो मुद्गरेऽपि स्यात द्रुहिणे च परश्वधे ॥ ५२ ॥
दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमेलेयरूप्ययोः।
द्रौर्वीणं मृष्टपर्णे स्याद् दूर्वायां स्वरसेऽपि च ॥ ५३
घर्मणस्तु पुमान्वृक्षभेदसर्पप्रभेदयोः।
धरणं मानभेदेऽपि धारणे धरणी भुवि ॥ ५४ ॥
धर्षणं स्यात्परिभवे रतेऽसत्यां तु धर्षिणी।
धरुणः सम्मते नीरे स्वर्ल्लोके परमेष्ठिनि ॥ ५५ ॥
धारणी नाडिकायां स्याद् बुद्धोक्तमन्त्रभिद्यपि।
धारणाऽङ्गे च योगस्य न पुंसि स्याद्विधारणे ॥ ५६ ॥
धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति।
निःश्रेणिरधिरोहिण्यां खर्जूरीपादपे स्त्रियाम् ॥ ५७ ॥
निर्याणं वारणापाङ्गदेशे मोक्षे ऽध्वनिर्गमे।
निर्माणं निर्मितौ सारे समञ्जसे नपुंसकम् ॥ ५८ ॥
निर्वाणमस्तङ्गमने निर्वृतौ गजमज्जने।
सङ्गमेऽप्यपवर्गे च प्रवणो ना चतुष्पथे ॥ ५९ ॥
क्रमनिम्नमहीभागोदरप्रह्वेषु च त्रिषु।
प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्गरे ॥ ६० ॥
प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि।

इयत्तायां च हेतौ च क्लीबैकत्वे प्रमातरि ॥ ६१ ॥
पत्रोर्णं धौतकौशेये क्लीबं स्याच्छ्योणके पुमान् ।
पक्षिणी पूर्णिमायां स्याद्विहङ्ग्यां शाकिनीभिदि ॥ ६२ ॥
आगामी वर्त्तमानाहर्युक्तरात्रावपि स्त्रियाम् ।
प्रवेणिः स्त्री कुथावेण्योः पुराणं पञ्चलक्षणम् ॥ ६३ ॥
पणे पुंसि त्रिषु प्रले पूरणः पूरके त्रिषु ।
क्लीबं पिण्डप्रभेदे च पूरणी शाल्मलिद्रुमे ॥ ६४ ॥
पटारम्भकसूत्रेषु प्रोक्षणं सेचने वधे ।
वरुणस्तरुभेदे ऽप्सु पश्चिमाशापतावपि ॥ ६५ ॥
वरुणस्तु पुमान् तिक्तशाकप्राकारयोरपि ।
क्लीबं कन्यादिवरणे वेष्टने स्त्री नदीभिदि ॥ ६६ ॥
वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे ।
ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम् ॥ ६७ ॥
भूमिदेवे तु पुंलिङ्गः स्फुञ्जिकापृक्कयोः स्त्रियाम् ।
वारुणी गण्डदूर्वायां प्रतीचीसुरयोरपि ॥ ६८ ॥
भरणी घोषके ऋक्षे भरणं वेतने भृतौ ।
भ्रमणी कारण्डिकायां क्रीडाद्यायामधीशितुः ॥ ६९ ॥
भीषणो रसे सल्लक्यां ना गाढे दारुणे त्रिषु ।
मसृणोऽकर्कशे स्निग्धे त्रिपूमायां तु योषिति ॥ ७० ॥
मत्कुणो निर्विषाणेभे निःश्मश्रुपुरुषेऽपि च ।
उद्दंशे नालिकेरे च मार्गणो याचके शरे ॥ ७१ ॥
याञ्चाऽन्वेषणयोः क्लीबं यन्त्रणं रक्षणे स्मृतम् ।
बन्धने स्यान्नियमने रवणः शब्दने खरे ॥ ७२ ॥
रमणं पटोलमूले नार्यां स्त्री ना धवे स्मरे ।
रोषणः पारदे हेमघर्षणोपलयोः पुमान् ॥ ७३ ॥

क्रोधने वाच्यलिङ्गः स्याद्रोहिणी कण्ठरुग्भिदि ।
तडित्कटुम्भरासोमवल्केषु लोहितागवोः ॥ ७४ ॥
लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे ।
तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदद्विषोः स्त्रियाम् ॥ ७५ ॥
लक्षणं नाम्नि चिन्हे च सारस्यां लक्षणा क्वचित् ।
लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति ॥ ७६ ॥
रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत् ।
विषाणी क्षीरकाकोल्याम् अजशृङ्ग्यां च योषिति ॥ ७७ ॥
कुष्ठनामौषधे क्लीबं पशुशृङ्गभदन्तयोः ।
विपणिः पण्यवीथ्यां च भवेदापणपण्ययोः ॥ ७८ ॥
शरणं गृहरक्षित्रोर्वधरक्षणयोरपि ।
श्रवणं च श्रुतौ कर्णे नक्षत्रे न नपुंसकम् ॥ ७९ ॥
श्रमणो यतिभेदे ना निन्द्यजीविनि तु त्रिषु ।
स्त्रियां सुदर्शनामांस्योर्मुण्डीरीशबरीभिदोः ॥ ८० ॥
श्रवणो मासि पाषण्डे दध्याल्यां श्रावणा स्त्रियाम् ।
शिङ्घाणं काचपात्रे च लोहनासिकयोर्मले ॥ ८१ ॥
श्रीपर्णी काश्मरीकुम्भ्योः क्लीबं पद्माग्निमन्थयोः ।
सङ्कीर्णं निचितेऽपि स्यादशुद्धे चापि भेद्यवत् ॥ ८२ ॥
सरणिः पङ्क्तौ मार्गे च सारणो राक्षसान्तरे ।
रुग्भेदे ना प्रसारण्यां स्वल्पनद्यां च सारणी ॥ ८३ ॥
सुषेणः करमर्दे स्याद्विष्णुसुग्रीववैद्ययोः ।
सुवर्णो ना स्वर्णकर्षे सुवर्णानुमखान्तरे ॥ ८४ ॥
श्रीकृष्णागुरुणि क्लीबे काञ्चने हरिचन्दने ।
सुपर्णः स्वर्णचूडे च गरुडे कृतमालके ॥ ८५ ॥
सुपर्णा कमलिन्यां च वैनतेयस्य मातरि ।

हरेणुर्ना सतीले स्त्री रेणुकाकुलयोषितोः ॥ ८६ ॥
हरणं यौतकादीनां द्रव्ये भुजे हृतावपि ।
हरिणः पुंसि सारङ्गे विषदे त्वभिधेयवत् ॥ ८७ ॥
हरिणी हरितायां च नारीभिद्वृत्तभेदयोः ।
सुवर्णप्रतिमायां च हर्षणोऽक्षिरुगन्तरे ॥ ८८ ॥
हर्षके योगभेदे च श्राद्धदेवेऽपि च क्वचित् ।
हिरण्यं रेतसि स्वर्णे वराटे च नपुंसकम् ॥ ८९ ॥

( णचतुर्थम् । )

अङ्गारिणी हसन्त्यां च भास्करत्त्यक्तदिश्यपि ।
अथर्वणिर्नाऽथर्वज्ञब्राह्मणे च पुरोधसि ॥ ९० ॥
अतर्पणं प्रीणये स्यान्मङ्गलालेपनेऽपि च ।
आरोहणं स्यात्सोपाने समारोहे प्ररोहणे ॥ ९१ ॥
उत्क्षेपणं तु व्यजने धान्यमर्दनवस्तुनि ।
स्यादुद्धरणमुद्धारवान्तान्नोन्मूषलेष्वपि ॥ ९२ ॥
कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च ।
अथ कामगुणो रागे विषयाभोगयोरपि ॥ ९३ ॥
चीर्णपर्णं तु निम्बेऽपि खर्जूरीभूरुहे पुमान् ।
चूडामणिः शिरोरत्ने काकचिञ्चाफले पुमान् ॥ ९४ ॥
जुहुवाणोऽपि चाध्वर्यावपि स्याज्जातवेदसि ।
तण्डुवीणः कीटमात्रे बर्बरतण्डुलोदके ॥ ९५ ॥
त्रायमाणा वार्षिके स्त्री रक्ष्यमाणेऽभिधेयवत् ।
तैलपर्णी मलयजे श्रीवासे सिल्हकेऽपि च ॥ ९६ ॥
दाक्षायणी त्वपर्णायामश्विन्याद्युडुषु स्त्रियाम् ।
अथ देवमणिर्भर्गेऽश्वावर्ते कौस्तुभेऽपि च ॥ ९७ ॥
नारायणोऽच्युते भीरुगौर्योर्नारायणी मता ।

अथो निगरणं क्लीबं भोजने स्याद्गले पुमान् ॥ ९८ ॥
अथ निःसरणं मृत्युपायमोक्षेषु निर्गमे ।
स्यान्निस्तरणमुपाये निस्तारे तरणेऽपि च ॥ ९९ ॥
निरूपणं स्यादालोके विचारे च निदर्शने ।
पर्परीणश्च पर्णस्य शिरायां द्यूतकम्बले ॥ १०० ॥
पर्णचूर्णरसेऽपि स्यात्पर्परीणं तु पर्वणि ।
प्रवारणं निषेधे स्यात्काम्यदाने च न द्वयोः ॥ १ ॥
परीरणः स्यात्कमठे दण्डे च पट्टशाटके ।
परायणमभीष्टे स्यात्तत्पराश्रययोरपि ॥ २ ॥
परवाणिः पुमान्धर्माध्यक्षवत्सरयोरपि ।
परायणं समासङ्गकार्त्स्न्यपारगतावपि ॥ ३ ॥
पीलुपर्णी विम्बिकायां मूर्वायामौषधीभिदि ।
अथ पुष्करिणी चेभ्यां सरोजिन्यां जलाशये ॥ ४ ॥
मधुपर्णी तु गम्भीर्यां नीलिसंज्ञौषधावपि ।
मीनीम्रीणस्तु पुंलिङ्गो दुर्दुराम्रे च खञ्जने ॥ ५ ॥
रक्तरेणुस्तु सिन्दूरपलाशकोरके पुमान् ।
रागचूर्णः पुमान्दन्तधावने मकरध्वजे ॥ ६ ॥
ररिहाणस्तु पुंसि स्यान्महादेवेऽम्बरे ऽपि च ।
लम्बकर्णः स्मृतो कोठपादपे च्छगले ऽपि च ॥ ७ ॥
विदारणं विडम्बे च भेदे क्लीबं रणे द्वयोः ।
अथ वैतरणी नद्यां प्रेतानां या तु मातरि ॥ ८ ॥
शरवाणिः शरमुखे पापिष्ठे शरजीविनि ।
पुमानथो शिखरिणी रसालावृत्तभेदयोः ॥ ९ ॥
नारीरत्ने मल्लिकायां रोमावल्यामपि स्त्रियाम् ।
अथ संसरणं क्लीबमसम्बाधचमूगतौ ॥ १० ॥

घण्टापथे च संसारे रणारम्भे च कुत्र चित् ।
समीरणः स्यात्पवने पथिके च फणिज्जके ॥ ११ ॥
हस्तिकर्णश्चोरुबूके पलाशगणभेदयोः ।

( णपञ्चमम् )

अवग्रहणमित्येतत्प्रतिरोधेऽप्यनादरे ॥ १२ ॥
अवतारणं भूतादिग्रहे वस्त्राञ्चलेऽर्चने ।
अविदारणमाख्यातं सम्परायेऽवदारणे ॥ १३ ॥
परिभाषायां सनिन्दोपालम्भने नियमेऽपि च ।
उक्तो मत्तवारणस्तु प्रक्लिन्नकटकुञ्जरे ॥ १४ ॥
क्लीबं प्रासादवीथीनां कुण्डवृक्षवृतावपि ।
मण्डूकपर्णी मञ्जिष्ठाब्राह्मण्योर्ना तु शोणके ॥ १५ ॥
रोमहर्षणे रोमाञ्चे ना सूते च बिभीतके ।
वातरायण उन्मत्ते निष्प्रयोजनपूरुषे ॥ १६ ॥
काण्डे च परपत्रे च कूटे च परसंक्रमे ।

( णषष्ठम् )

दोहदलक्षणमुक्तं वयःसन्धौ च गर्भे च ॥ १७ ॥
यौवनलक्षणमप्याख्यातं लावण्यकुचयोश्च ।

## ( इति णान्तवर्गः )

( तैकम् । )

तश्चौरामृतपुच्छेषु क्रोडे म्लेच्छे च कुत्र चित् ।
अपुमांस्तरणे पुण्ये कथितः शब्दवेदिभिः ॥ १ ॥

( तद्वितीयम् । )

अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाचले ।
अन्तं स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु ॥ २ ॥

आर्त्तिः पीडाधनुष्कोट्योः स्त्र्याप्ते लब्धे स्वसत्तयोः।
आप्तिः स्त्री योगसम्प्राप्त्योरितं स्मृते गते त्रिषु ॥ ३ ॥
ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रियाम्।
उक्तमेकाक्षरच्छन्दस्युक्तं स्याद्भाषिते त्रिषु ॥ ४ ॥
ऊतिः स्त्री रक्षणे स्यूता वृत्तिः कल्याणवर्त्मनोः।
जुगुप्सास्पर्द्धयोः स्त्री स्यादृतमुञ्छशिले जले ॥ ५ ॥
सत्ये दीप्ते पूजिते स्यादृतुर्वर्षादिषट्सु च।
आर्त्तवे भासि च पुमानेतः कर्बुर आगते ॥ ६ ॥
क्षत्ता शूद्राक्षात्रियजे प्रतीहारे च सारथौ।
भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसो पुमान् ॥ ७ ॥
कर्त्ता तु कारके वाच्यलिङ्गो ना परमेष्ठिनि।
क्रतुर्यज्ञे मुनौ पुंसि कान्तिः शोभेच्छयोः स्त्रियाम् ॥८॥
कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे।
लोहे च चन्द्रसूर्यायःपयायान्तःशिलासु च ॥ ९ ॥
क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम्।
कीर्तिःप्रसादयशसोर्योषित् कुन्तो गवेधिकायां स्यात्॥१०॥
प्रासायुधे च कुन्ती गुग्गुलुपृथयोश्च शाल्वयाम्।
कृतं युगे ऽलमर्थे स्याद्विहिते हिंसिते त्रिषु ॥ ११ ॥
कृत्तं तु वेष्टिते छिन्ने कृतिः कारणहिंसयोः।
कृत्तिश्चर्मत्वचोर्भूर्जे कृत्तिकायां द्वयं स्त्रियाम् ॥ १२ ॥
केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि।
गर्तास्त्रिगर्त्तभेदे स्यादवटे च कुकुन्दरे ॥ १३ ॥
ग्रस्तं ग्रासीकृतेऽपि स्याल्लुप्तवर्णपदेऽपि च।
गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राऽभ्युपाययोः ॥ १४ ॥
नाडी व्रणसरण्यां च गतं विज्ञानयातयोः।

गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे ॥ १५ ॥
गीतिश्छन्दसि गाने स्त्री गीतं शब्दितगानयोः ।
गुप्तिस्त्र्यवकरस्थाने कारागारे च रक्षणे ॥ १६ ॥
गुप्तं स्याद्रक्षिते गूढे घातः काण्डप्रहारयोः ।
घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत् ॥ १७ ॥
चित्तं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम् ।
चितिश्चिन्त्याद्वृन्दयोः स्त्री जातं व्यक्तौघजन्मसु ॥ १८ ॥
क्लीबं त्रिलिङ्गमुत्पन्ने जातिः स्त्री गोत्रजन्मनोः ।
अश्मन्तिका मलक्योश्च सामान्यच्छन्दसोरपि ॥ १९ ॥
जातीफले च मालत्यां ज्ञातिस्तातसगोत्रयोः ।
पुमानथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् ॥ २० ॥
क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु समीरणे ।
तातो ऽनुकम्प्ये जनके तिक्तो रससुगन्धयोः ॥ २१ ॥
तिक्ता तु कटुरोहिण्यां पर्पटे तु नपुंसकम् ।
तूस्तं रेणौ च विख्यातं जटायां च नपुंसकम् ॥ २२ ॥
त्रेता युगेऽग्नित्रितये दत्तं विश्राणितेऽर्चिते ।
दन्तो ऽद्रिकटके कुञ्जे दशनेऽथौषधौ स्त्रियाम् ॥ २३ ॥
दान्तस्तु दमितेऽपि स्यात्तपःक्लेशासहे त्रिषु ।
दितिर्दैत्यजनन्यां च खण्डने ऽपि च योषिति ॥ २४ ॥
दीप्ते निर्भासिते दग्धे ज्वलितेऽथ द्रुतं त्रिषु ।
शीघ्रे विलीने विद्राणे द्युतिः स्त्री रश्मिशोभयोः ॥ २५ ॥
दृतिश्चर्मपुटे मत्स्ये ना धातुर्नेन्द्रियेषु च ।
शब्दयोनिमहाभूततद्गुणेषु रसादिषु ॥ २६ ॥
मनःशिलादौ श्लेष्मादौ विशेषाद् गैरिकेऽस्थिन च ।
धाता हिरण्यगर्भे ना पालके त्रिष्वथो धुतम् ॥ २७ ॥

सक्ते विधूते धूतं तु कम्पिते भर्त्सिते त्रिषु ।
धूर्त्तं तु खण्डलवणे धुस्तूरे ना विटे त्रिषु ॥ २८ ॥
धूतिर्नेष्टौ स्त्रियां तुष्टौ योगाभिद्धैर्यधारणे ।
नतं तगरपाट्यां स्यात्क्लीबं कुटिलनम्रयोः ॥ २६ ॥
त्रिषु नीतिर्नयेऽपि स्यात्प्रापणे ऽपि च योषिति ।
पङ्क्तिः स्त्री गौरवे पाके पत्तिर्ना पदगे स्त्रियाम् ॥३०॥
गतावेकरथैकेभत्र्यश्वपञ्चपदातिके ।
पङ्क्तिर्दशाक्षरच्छन्दोदशसंख्यालिषु स्त्रियाम् ॥ ३१ ॥
पतिर्धवे ना त्रिष्वाशे प्राप्तं लब्धे समञ्जसे ।
पातो निपातने त्राते त्रिषु प्राप्तिर्महोदये ॥ ३२ ॥
लाभेऽपि च स्त्रियां प्राप्तिः पूर्त्तिप्रादेशयोः स्त्रियाम् ।
पीतिर्नाऽश्वे स्त्रियां पाने प्रीतं हृषितनर्मणोः ॥ ३३ ॥
पीतं पाने हरिद्रायां स्त्रियाङ्गौरेऽभिधेयवत् ।
प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम् ॥ ३४ ॥
पुस्तं क्लीबे पुस्तके च लेप्यादिशिल्पकर्मणि ।
प्लुतं तुरङ्गमगतौ क्लीबं पुंसि त्रिमात्रके ॥ ३५ ॥
पूतं त्रिषु पवित्रे च शटिते बहुलीकृते ।
पूर्त्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि ॥ ३६ ॥
प्रोतं नपुंसकं वस्त्रे खचिते वाच्यलिङ्गकम् ।
प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः ॥ ३७ ॥
पोतः शिशौ वहित्रे च गृहस्थाने च वाससि ।
वृत्तिस्तु वरणेऽपि स्याद्वेष्टनेऽपि च योषिति ॥ ३८ ॥
भर्त्ता स्वामिनि पुंसि स्यात् त्रिषु धातरि पोष्टरि ।
भक्तिर्विभागे सेवायां स्त्रियां भ्रान्तिस्तु योषिति ॥३६॥
मिथ्यामितौ च भ्रमणे भित्तिः कुड्यप्रदेशयोः ।

भीतिर्भये स्त्रियां भीतं भयेऽथ भीयुते त्रिषु ॥ ४० ॥
भूतिर्भस्मनि सम्पत्तौ हस्तिशृङ्गारयोः स्त्रियाम् ।
भूतं क्ष्माऽऽदौ पिशाचादौ जन्तौ क्लीवं त्रिषूचिते ॥४१॥
प्राप्ते वित्ते समे सत्ये देवयोन्यन्तरं तु ना ।
कुमारेऽपि भृतिः स्त्री स्यान् मूल्येऽपि भरणे ऽपि च॥४२॥
मतं तु सन्मते ज्ञाते मत्तिः स्त्री च्छादियोस्मृतौ ।
मन्तुः पुंस्यपराधे ऽपि मनुष्येऽपि प्रजापतौ ॥ ४३ ॥
माता गौर्यादिजननीगोब्रह्माण्यादिभूमिषु ।
मातिर्मानेऽप्यवच्छेदे मुक्तिर्मोक्षे च मोक्षणे ॥ ४४ ॥
मात्रादयः स्त्रियां मुक्तः प्राप्तमोक्षे च मोचिते ।
त्रिषु स्त्री मौक्तिके मूर्त्तिः कायकाठिन्ययोः स्त्रियाम् ४५
मूर्त्तं स्यात् त्रिषु मूर्च्छाले कठिने मूर्त्तिमत्यपि ।
मृतं तु याचिते मृत्यौ क्लीवं मृत्पुमति त्रिषु ॥ ४६ ॥
यतिः स्त्री पादविच्छेदे निकारयतिनोः पुमान् ।
यन्ता मेठे च सूते ना युक्तिः स्त्री न्याययोगयोः ॥ ४७ ॥
युतो युक्तो ऽपृथग्भूते क्लीबं हस्ते चतुष्टये ।
रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु ॥ ४८ ॥
क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलके सृजि ।
रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः ॥ ४९ ॥
रत्नं वर्त्मनि नद्यां स्त्री रतं सुरतगुह्ययोः ।
रिक्तं शून्ये वने रीतिः स्त्रियां स्यन्दप्रचारयोः ॥ ५० ॥
पित्ताले लोहकिट्टे च लत्ता प्रियङ्गुशाकयोः ।
पृक्काज्योतिष्मती वल्लीलत्ताकस्तूरिकासु च ॥ ५१ ॥
माधवीदूर्वयोर्लिप्तं विलिप्तविषदिग्धयोः ।
भुक्ते लूता तूर्णनाभपिपीलिकागदान्तरे ॥ ५२ ॥

वप्ता तु जनके पुंसि वापकेऽप्यभिधेयवत्।
वक्ता तु पण्डितेऽपि स्याद्वाग्मिन्यप्यन्यलिङ्गकः॥ ५३॥
व्यस्तं तु व्याकुले व्याप्ते व्यक्तः स्फुटमनीषिणोः।
वस्तिर्द्वयोर्निरूहे नाभ्यधो भूम्नि दशासु च॥ ५४॥
वर्त्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः।
गात्रानुलेपनीदीपदशादीपेषु योषिति॥ ५५॥
वार्त्ता तु वर्त्तने वातिङ्गणे कृष्याद्युदन्तयोः।
निःसारारोग्ययोः क्लीबं वृत्तिर्मल्लीरुजोः स्त्रियाम्॥५६॥
व्याप्तं ख्याते समाक्रान्ते व्याप्ति र्व्यापनरम्भयोः।
स्त्रियां वित्तिर्विचारे च लाभसम्भावयोः स्त्रियाम्॥ ५७॥
वित्तं क्लीबन्धने वाच्यलिङ्गं ख्याते विचारिते।
वीतमसारगजे स्यादङ्कुशकर्मण्यसारतुरगेऽपि॥ ५८॥
वीतिर्गतौ च दीप्तौ प्रजनाशनधावनेषु स्त्री।
वृत्तिर्विवरणाजीवकैशिक्यादिप्रवर्तने॥ ५९॥
स्त्री वृतं प्रसववन्धे घटीधाराकुचाग्रयोः।
वृत्तोऽधीतेप्यतीतेऽतिवर्तुलेऽपि वृते मृते॥ ६०॥
दृढेऽन्यलिङ्गं वा क्लीवं छन्दश्चारित्रवृत्तिषु।
शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्॥ ६१॥
शस्तं क्षेमे प्रशस्ते च शान्तिः स्त्री मङ्गले शमे।
शास्ता समन्तभद्रे ना शासने पुनरन्यवत्॥ ६२॥
शान्तोऽभियुक्तरसयोः पुंसि त्रिषु शमान्विते।
अव्ययं वारणे शान्तं शान्तं शितं च दुर्बले॥ ६३॥
निशिते च शितिर्भूर्जे ना सितासितयोस्त्रिषु।
शीतं हिमगुणे क्लीवं शीतलालसयोस्त्रिषु॥ ६४॥
वानीरे बहुवारे ना शुक्तं पूताम्लनिष्ठुरे।

श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम् ॥ ६५ ॥
शुक्तिः कपालशकले शङ्खे शङ्खनखेऽपि च ।
नख्यश्वावर्तदुर्नामुक्तास्फोटेषु च स्त्रियाम् ॥ ६६ ॥
श्रुतमाकर्णिते शास्त्रे श्वेतो द्वीपाद्रिभेदयोः ।
श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च ॥ ६७ ॥
क्लीबं रूप्येऽन्यवच्छुक्ले सन्त्साधौ धीरशस्तयोः ।
मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम् ॥६८॥
सातिर्दानेऽवसाने स्त्री स्वान्तं चेतसि गह्वरे ।
स्थितं प्रतिज्ञातवति चोर्ध्वनिश्चलयोस्त्रिषु ॥ ६९ ॥
स्थितिः स्त्रियामवस्थाने मर्यादायां च सीमनि ।
सितमवसिते च बद्धे धवले त्रिषु धवलायां स्त्री ॥ ७० ॥
सीता लाङ्गलपद्धतिर्वैदेहीस्वर्गगङ्गासु ।
सुतस्तु पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता ॥ ७१ ॥
सुप्तिः स्पर्शाज्ञता निद्राविश्रम्भे शयने स्त्रियाम् ।
सूतस्तु सारथौ तक्ष्णि क्षत्रियाद् ब्राह्मणीसुते ॥ ७२ ॥
बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु ।
स्यूतिः सीवनसन्तत्योः स्त्रियां स्यूतः प्रसेवके ॥ ७३ ॥
ना त्रिषूते स्मृतिर्धर्मशास्त्रस्मरणयोः स्त्रियाम् ।
सृतिः स्त्री गमने मार्गे सेतुर्नाऽलौ कुमारके ॥ ७४ ॥
हस्तः करे करिकरे स प्रकोष्ठकरेऽपि च ।
ऋक्षे केशात्परो व्राते हितं पथ्ये गते धृते ॥ ७५ ॥
हेतिः स्यादायुधज्वालासूर्यतेजःसु योषिति ।

( ततृतीयम् )

अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते ॥ ७६ ॥
अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः ।

अमृता मागधीपथ्यागुडूच्यामलकीषु च ॥ ७७ ॥
अनृतं कृषावसत्येऽप्यजितो ना हरौ त्रिषु ।
अनिर्जिते चाच्युतस्तु हरौ पुंसि त्रिषु स्थिरे ॥ ७८ ॥
अर्दितं याचितेऽपि स्याद्गातव्याधौ च हिंसिते ।
अक्षतं न द्वयोः पण्डे लाजेषु त्रिष्वहिंसिते ॥ ७९ ॥
यवेऽपि क चिदव्यक्तो हरौ स्मरहरे पुमान् ।
परमात्ममहद्दाद्योः क्लीबं स्यादस्फुटे त्रिषु ॥ ८० ॥
अनन्तः केशवे शेषे पुमाननवधौ त्रिषु ।
अनन्ता च विशल्यायां शारिवादूर्वयोरपि ॥ ८१ ॥
कणादुरालभापथ्यापार्वत्यामलकीषु च ।
विश्वम्भरागुडूच्योः स्यादनन्तं सुरवर्त्मनि ॥ ८२ ॥
अश्मन्तमशुभे चुल्यां मरणेऽनवधावपि ।
क्षेत्रे ऽप्यथायतिः पुंसि हिमदीधितिकालयोः ॥ ८३ ॥
अर्हस्तु क्षपणे बुद्धे पुंसि मान्येऽन्यलिङ्गकः ।
अर्हन्तश्चापि सुगते क्षेपणेऽपि च दृश्यते ॥ ८४ ॥
अगस्तिः कुम्भयोनौ च वङ्कसेनतरौ पुमान् ।
अर्वती कुम्भदास्यां च वडवायां च योषिति ॥ ८५ ॥
अङ्गातिः पुंस्यग्निहोतृब्रह्मवन्हिष्वथादितिः ।
भूदेवमात्रोरंहतिस्त्याग रोगेऽप्युभे स्त्रियौ ॥ ८६ ॥
आपातः पुंसि पतने तदात्वे च प्रकीर्तितः ।
आघ्रातं शिङ्कित क्रान्ते ऽप्याख्यातं भाषिते तिङि ॥८७॥
आध्यातः शब्दिते दग्धे वातरुग्भेदसंयुते ।
आप्लुतः स्नातके स्नातेऽप्यादृतः सादरेऽर्चिते ॥ ८८ ॥
आचितः शकटोन्मेये पलानामयुतद्वये ।
पुंलिगः सङ्गृहीतेऽपि छन्नेऽपि स्यात्त्रिलिङ्गकः ॥ ८९ ॥

आहतं गुणिते चापि ताडिते च मृषाऽर्थके ।
स्यात्पुरातनवस्त्रेऽपि नववस्त्रे च नाऽऽनके ॥ ९० ॥
आनर्तो देशभेदेऽपि नृत्यस्थाने जले रणे ।
आवर्तश्चिन्तने वारिभ्रमे चावर्तने पुमान् ॥ ९१ ॥
आस्फोतं तु पुमानर्कपर्णे स्यात्कोविदारके ।
आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति ॥९२॥
आयस्तस्तोजिते क्षिप्ते क्लेशिते कुपिते हते ।
आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः ॥ ९३ ॥
आपत्तिस्तु स्त्रियां स्नेहे वशित्वे वासवे बले ।
आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि ॥ ९४ ॥
आसत्तिः सङ्गमे लाभे स्त्रियामापत्तिरापदि ।
प्रापणेऽपि च योषित्स्यादुदन्तः साधुवार्तयोः ॥ ९५ ॥
उषितं व्युषिते दग्धे ऽप्युदात्तस्तु स्वरान्तरे ।
दयात्यागादिसम्पन्ने काव्यालङ्कारकृत्ययोः ॥ ९६ ॥
उत्तप्तं शुष्कमांसेऽथ त्रिषु तप्ते परिप्लुते ।
उचितं तु भवे न्यस्ते मिते ज्ञाते समञ्जसे ॥ ९७ ॥
उद्धृतं स्यात्रिषूत्क्षिप्ते परिभुक्तोज्झितेऽपि च ।
उत्थितं स्यात्रिषूत्पन्ने प्रोद्यते वृद्धिमत्यपि ॥ ९८ ॥
उद्घातस्तु पुमान्पादस्खलने समुपक्रमे ।
पवनाभ्यासयोगस्य कालभेदे च कीर्तितः ॥ ९९ ॥
उत्तुङ्गे मुद्गरेऽपि स्यादुदितं तूक्त आगते ।
उच्छ्रितं त्रिषु सञ्जाते समुन्नद्धप्रवृद्धयोः ॥ १०० ॥
उन्मत्त उन्मादवति धूस्तूरमुचुकुन्दयोः ।
उद्भ्रान्तो निर्मदगजे पुमानुद्भ्रमिते त्रिषु ॥ १ ॥
एधतुः पुरुषेऽग्नौ ना कलितं विदिताप्तयोः ।

कपोतः स्याच्चित्रकण्ठपारावतविहङ्गयोः ॥ २ ॥
अथ क्रन्दितमाह्वाने रुदितेऽपि नपुंसकम् ।
क्षारितः स्नाविते क्षारे चाभिशस्तेऽपि च त्रिषु ॥ ३ ॥
कापोतो रुचके क्लीबे कपोतौघेऽञ्जनान्तरे ।
किरातो म्लेच्छभेदे स्याद् भूनिम्बेऽल्पतनावपि ॥ ४ ॥
स्त्रियां चामरधारिण्यां कुट्टिनीदुर्गयोरपि ।
कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥ ५ ॥
गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे ।
ग्रथितं गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम् ॥ ६ ॥
गभस्तिः किरणे सूर्ये ना स्वाहायां तु योषिति ।
गर्मुत् स्त्री स्वर्णलतयोर्गोपतिः शिवषण्ढयोः ॥ ७ ॥
नृपभास्करयोः पुंसि चेष्टितं गतिचेष्टयोः ।
जगत् स्यात् पिष्टपे क्लीवं वायौ ना जङ्गमे त्रिषु ॥ ७ ॥
जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ।
जयन्ती वृक्षभिद्गौर्योरिन्द्रपुत्रीपताकयोः ॥ ९ ॥
पुमानैन्द्रे हरे भीमे ज्वलितं दग्ध उज्ज्वले ।
जामाता दुहितुः पत्यौ सूर्यावर्त्ते धवे पुमान् ॥ १० ॥
जीमूतोऽद्रौ धृतिकरे देवताडे पयोधरे ।
जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे ॥ ११ ॥
जीवन्ती जीवनीशम्योर्गुडूचीवृन्दयोरपि ।
जृम्भितं करणे स्त्रीणामीहास्फोटितयोरपि ॥ १२ ॥
त्वरितं प्रजवे शीघ्रे त्रिगर्तो गणितान्तरे ।
देशेऽपि ना घुर्घुरिकाकामुकाङ्गनयोः स्त्रियाम् ॥ १३ ॥
तृणता धनुषि तृणत्वे दंशितमपि जातदंशे स्यात् ।
कवचाचिते द्विजातिर्विप्राण्डजयोश्च पुंलिङ्गः ॥ १४ ॥

दुर्जातं व्यसने क्लीबे सम्यग्जातेऽन्यलिङ्गकम् ।
दुर्गतिर्नरकेनैस्स्व्ये स्त्री दृष्टान्त उदाहृतौ ॥ १५ ॥
शास्त्रे च मरणे धीमान् पण्डिते च बृहस्पतौ ।
निर्ऋतिः स्यादलक्ष्म्यां स्त्री दिशापालान्तरे पुमान् ॥१६॥
निकृतं विप्रलम्भे स्यान्नीचे विप्रकृतेऽपि च ।
निर्मुक्तस्त्यक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि ॥ १७ ॥
निरस्तस्त्रिषु निष्ठ्यूते प्रेषितेषौ द्रुतोदिते ।
सन्त्यक्ते च प्रतिहते निमित्तं हेतुलक्ष्मणोः ॥ १८ ॥
निवातो दृढसन्नाहे वातशून्येऽपि चाश्रये ।
निशान्तं त्रिषु शान्ते स्यात्क्लीबं तु भवनोषसोः ॥ १९ ॥
निकृतिर्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम् ।
निर्वृतः सुस्थितावस्तगमने च सुखे स्त्रियाम् ॥ २० ॥
नियतिर्नियमे दैवे स्त्री पतन् पातुके खगे ।
प्रहृतं वितते क्षुस्मे पर्यस्तः पतिते हते ॥ २१ ॥
प्रभूतमुद्गते प्राज्ये पण्डितः सिल्हके कवौ ।
पलितं शैलजे तापे केशपाके च कर्दमे ॥ २२ ॥
प्रसृतः सुप्रसारे स्याद्विनीते वेगिते त्रिषु ।
अर्द्धाञ्जलौ तु पुंलिङ्गो जङ्घायां प्रसृता मता ॥ २३ ॥
प्रसूतं कुसुमे क्लीबं त्रिषु सञ्जातसूतयोः ।
प्रणीतः संस्कृताग्नौ ना यज्ञपात्रान्तरे स्त्रियाम् ॥ २४ ॥
त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते ।
प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु ॥ २५ ॥
प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च ।
परेतो वाच्यलिङ्गः स्याद् मृते भूतान्तरे पुमान् ॥ २६ ॥
पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः ।

देवमुन्यन्तरे शैले प्रपातो निर्झरे तटे ॥ २७ ॥
पर्याप्तं तु यथेष्टे स्यात्तृप्तौ शक्ते निवारणे ।
पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति ॥ २८ ॥
पक्षतिश्च भवेत्पक्षमूले च प्रतिपत्तिथौ ।
प्रसूतिरुद्भवेऽपि स्यात्तनये दुहितर्यपि ॥ २९ ॥
प्रतातिर्विस्तृतौ वल्यां पद्धतिः पङ्क्तिवर्त्मनोः ।
प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्त्तने ॥ ३० ॥
अवन्त्यादौ च पर्याप्तिः प्रकामप्राप्तिरक्षणे ।
प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः ॥ ३१ ॥
योनौ लिङ्गे पौरवर्गेऽमी पक्षत्यादयः स्त्रियाम् ।
पार्वती सल्लकीदुर्गागोपालपुत्रिकासु च ॥ ३२ ॥
प्रार्थितं याचिते शत्रुसंरुद्धे ऽभिहते त्रिषु ।
पित्सन्विहङ्गमे पुंसि पतनेच्छे पुनस्त्रिषु ॥ ३३ ॥
पिशितं मांसे मांस्यां स्त्री पिण्डितं गुणिते घने ।
पीडितं करणे स्त्रीणां यन्त्रिते वाधितेऽपि च ॥ ३४ ॥
पुटितं स्याद्दहिपुटे पाटितस्यूतयोरपि ।
पृषन्मृगे पुमान्विन्दौ न द्वयोः पृषतोऽपि ना ॥ ३५ ॥
अनयोश्च त्रिषु श्वेतविन्दुयुक्ते ऽप्युभाविमौ ।
प्रोक्षितं निहते सिक्ते बृहती वसनान्तरे ॥ ३६ ॥
छन्दोभित्क्षुद्रवार्ताकीवारिधानीषु वाचि च ।
कण्टकारीमहत्योश्च भवद्युष्मत्सतोस्त्रिषु ॥ ३७ ॥
स्त्री वाणभेदे भरतो नाट्यशास्त्रमुनौ तटे ।
रामानुजे च दौष्यन्तौ भास्वान्भास्वरसूर्ययोः ॥ ३८ ॥
भारतं ग्रन्थभेदे स्याद्वर्षभेदेऽथ भारती ।
वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः ॥ ३९ ॥

भासन्तः सुन्दराकारे त्रिपु ना भासपक्षिणि ।
भावितं वासिते प्राप्ते भूभृन्नाऽद्रौ महीपतौ ॥ ४० ॥
महती वल्लकीभेदे राज्ये स्यात्तु नपुंसकम् ।
तत्त्वभेदे पुमान्वृद्धे वाच्यवन्मथितं पुनः ॥ ४१ ॥
क्लीबं निर्जलघोले स्यात्त्रिष्वालोडितघृष्टयोः ।
मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम् ॥ ४२ ॥
मुपितं हृतखण्डितयोर्मूर्च्छितमपि सोच्छ्रये च मूढे च ।
रजतं त्रिपु शुक्ले स्यात्क्लीबं हारे च दुर्वर्णे ॥ ४३ ॥
रमतिर्नायके नाके पुंसि स्याद्रसितं पुनः ।
रुतस्तनितयोः क्लीबं स्वर्णादिखचिते त्रिषु ॥ ४४ ॥
रेवती हलिपत्न्यां स्यात्ताराभिन्मातृभेदयोः ।
रैवतस्तु सुवर्णालौ शैलभेदे च शङ्करे ॥ ४५ ॥
रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने ।
पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे ॥ ४६ ॥
रोहिन्मृग्यां लताभेदे स्त्री ना ऽर्के ललितं त्रिषु ।
ललिते चोशितेऽपि स्याद्धारभेदे तु न द्वयोः ॥ ४७ ॥
लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने ।
पुमान्नदान्तरे भौमे वर्णे च त्रिषु तद्वति ॥ ४८ ॥
वर्द्धितं प्रसिते च्छिन्ने पूरिते वहतिर्गवि ।
सचिवे पुंसि वहतुः पथिके वृषभे पुमान् ॥ ४९ ॥
वनिता जातरागस्त्रीस्त्रियो स्त्रिषु च याचिते ।
सेविते वापितं बीजाकृतमुण्डितयोस्त्रिषु ॥ ५० ॥
वसातिः स्यात्स्त्रियां वासे यामिन्यां च निकेतने ।
व्यायतं व्यापृते दीर्घे दृढः चातिशयेऽन्यवत् ॥ ५१ ॥
व्याघातो योगभेदे स्यादन्तरायप्रहारयोः ।

वासिता करिणीनार्योर्वासितम्भाविते रुते ॥ ५२ ॥
वासन्ती माधवीयूथ्योरुष्ट्रे नाऽवहिते त्रिषु ।
विविक्तं त्रिष्वसम्पृक्ते रहःपूतविवेकिषु ॥ ५३ ॥
वसुनन्दे ना विहस्तः पण्डिते व्याकुले त्रिषु ।
विनीतः सुवहाश्वे स्याद्वणिज्यपि पुमांस्त्रिषु ॥ ५४ ॥
जितेन्द्रियेऽपनीते च निभृते विनयान्विते ।
विश्वस्ता जातविश्वासे विश्वस्ता विधवास्त्रियाम् ॥ ५५ ॥
विद्युत्तडिति सन्ध्यायां स्त्रियां त्रिषु तु निष्प्रभे ।
विवृता क्षुद्ररुग्भेदे विस्तृते त्वभिधेयवत् ॥ ५६ ॥
विनेताऽदेशके राज्ञि ना विधाता तु वेधसि ।
स्मरे ना विनता तार्क्ष्यजनन्यां पटकाभिदि ॥ ५७ ॥
विनतः प्रणते भुग्ने शिक्षिते चाभिधेयवत् ।
विकृतं त्रिषु बीभत्सरागिते संस्कृतेऽपि च ॥ ५८ ॥
विच्छित्तिरङ्गरागे विच्छेदे हारभेदे स्त्री ।
विदितं बुद्धितार्थितयोर्विपत्तिरपि यातनाऽऽपदोर्योषित् ५६
वृत्तान्तः प्रक्रियायां स्यात्कात्स्न्र्यवार्त्ताप्रभेदयोः ।
प्रस्तावे वेष्टितं रुद्धे लासके करणान्तरे ॥ ६० ॥
वेल्लितं गमने क्लीवं कुटिले विधुते त्रिषु ।
विवर्त्तः समुदाये स्यादपवर्तननृत्ययोः ॥ ६१ ॥
शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः ।
श्रीमाँस्तिलकवृक्षे ना मनोज्ञे धनिके त्रिषु ॥ ६२ ॥
श्रीपतिः पुंसि पृथिवी नाथे च मधुसूदने ।
शुद्धान्तोऽन्तःपुरे क्ष्माभृद्रहः कक्षान्तरे ऽपि च ॥ ६३ ॥
स्रवन्ती तु तरङ्गिण्यां गुल्मस्थानौषधीभिदोः ।
संवर्त्तः प्रलये मुन्यन्तरे कर्षफलेऽपि च ॥ ६४ ॥

स्खलितं चलिते भ्रेषे संहृतं सङ्गते दृढे ।
संस्कृतः कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गकः ॥ ६५ ॥
क्लीबं तु लक्षणोपेते स्थपतिः कञ्चुकिन्यपि ।
जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु ॥ ६६ ॥
सङ्घातः पुंसि घाते च संहतौ नरकान्तरे ।
संवित्तिः प्रतिपत्तौ स्यादविवादे जनस्य च ॥ ६७ ॥
सन्ततिः स्यात्पंक्तौ गोत्रे पारम्पर्ये च पुत्रयोः ।
सङ्गतिः सङ्गमे ज्ञाने सन्नतिः प्रणतौ ध्वनौ ॥ ६८ ॥
समितिः सम्पराये स्यात्सभायां सङ्गमेऽपि च ।
समाप्तिरवसाने स्यात्समर्थनेऽथ सम्मतिः ॥ ६९ ॥
अभिलाषेऽप्यनुज्ञायां संविसाद्यास्तु योषिति ।
स्थापितं निश्चिते ऽन्यस्ते स्तिमितोऽचञ्चलार्द्रयोः॥ ७०
सिकता स्त्री सिकातले वालुकायां तु भूमनि ।
सुरतं स्यान्निधुवने देवत्वे सुरता स्मृता ॥ ७१ ॥
सुकृतं तु शुभे पुण्ये क्लीबं सुविहिते त्रिषु ।
सुव्रता सुखसन्दोह्याशोभनव्रतयोरपि ॥ ७२ ॥
सुनीतिः शोभननये ध्रुवमातरि योषिति ।
सूनृतं मङ्गलेऽपि स्यात्प्रियसत्ये वचस्यपि ॥ ७३ ॥
हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः ।
अस्त्रियां स्यात्तृणे चाथ हर्मितं क्षिप्तदग्धयोः ॥ ७४ ॥
हरिता स्त्री च दूर्वायां हरिद्वर्णयुते ऽन्यवत् ।
हंसन्सङ्गारधान्यां च मल्लिकाशाकिनीभिदोः ॥ ७५ ॥
हारीतः पक्षिभेदे स्यान्मुनिभेदे च कैतवे ।
हृषितं विस्मिते प्रीते प्रहते हृष्टलोमनि ॥ ७६ ॥

( तचतुर्थम् । )

अवसितमृद्धे ज्ञाते ऽप्यवसानगते च वाच्यलिङ्गं स्यात् ।
अवदातः सिते गौरे विशुद्धे ऽप्यन्यलिङ्गकः ।
अवगीतं तु निर्वादे त्वब्दगर्हितयोरपि ॥ ७८ ॥
अन्तर्गतं विस्मृते स्यान्मध्यप्राप्ते च वाच्यवत् ।
अङ्गारितं तु दग्धे स्यात्पलाशकलिकोद्गमे ॥ ७९ ॥
हसन्त्यां च लतामात्रे नदीभेदे च योषिति ।
अपावृतस्तु पिहिते स्वतन्त्रेऽपि च वाच्यवत् ॥ ८० ॥
अत्याहितं महाभीतौ जीवानपेक्षकर्मणि ।
अभिनीतं त्रिषु न्याय्ये संस्कृतामर्षिणोरपि ॥ ८१ ॥
अभिजातः कुलीने स्यात् न्याय्यपण्डितयोस्त्रिषु ।
अभियुक्तः परैरुद्धे तत्परेऽप्यभिधेयवत् ॥ ८२ ॥
अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च ।
अवध्वस्तः परित्यक्ते निन्दिते ऽप्यवचूर्णिते ॥ ८३ ॥
अधिक्षिप्तः प्रणिहिते कुत्सिते भर्त्सिते त्रिषु ।
अंशुमान् भास्करे शालपर्ण्यामंशुमती स्मृता ॥ ८४ ॥
भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु ।
अथानुमतिरूनेन्दुपूर्णिमाऽनुज्ञयोरपि ॥ ८५ ॥
अभिशस्तिः प्रार्थनाऽपवादयोश्च त्रयं स्त्रियाम् ।
आयुष्मान्योगभेदे ना वाच्यवच्चिरजीविनि ॥ ८६ ॥
उपाहितो ऽनलोत्पाते पुमानारोपिते त्रिषु ।
उपाकृतो ऽध्वरहतपशौ नोपद्रुते त्रिषु ॥ ८७ ॥
उदास्थितः प्रतीहारे प्रव्रज्याऽवसिते चरे ।
स्यादुल्लिखितमुत्कीर्णे तनूकृते च वाच्यवत् ॥ ८८ ॥
उद्ग्राहितमुदीर्णे स्याद्बद्धाग्राहितयोस्त्रिषु ।
भवेदुपचितं दग्धे समृद्धे वाच्यलिङ्गकम् ॥ ८९ ॥

उज्जृम्भितं त्रिषूत्फुल्ले चेष्टायां तु नपुंसकम् ।
उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः ॥ ९० ॥
उपसत्तिः सङ्गमात्रे सेवायामपि योषिति ।
ऋष्यप्रोक्ता शतावर्यतिबलाशूकशिम्बिषु ॥ ९१ ॥
ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे ।
नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम् ॥ ९२ ॥
नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने ।
कलधौतं सुवर्णे स्याद्रजते च नपुंसकम् ॥ ९३ ॥
भवेत्कुहरितं क्लीबं पिकालापे रतध्वनौ ।
मुकुद्वान् कुमुदप्रायदेशे स्याद्वाच्यलिङ्गकः ॥ ९४ ॥
कुमुद्वती कुमुदिन्यां कुशपत्न्यां च योषिति ।
कृष्णवृन्ता पाटलायां माषपर्ण्यां च योषिति ॥ ९५ ॥
अथ गन्धवती पृथ्वी पुरीभिद्व्यासमातृषु ।
सुरायां च गरुत्मांश्च पक्षिमात्रे खगाधिपे ॥ ९६ ॥
भवेद् गृहपतिः पुंसि गृहस्थेऽपि च मन्त्रिणि ।
चन्द्रकान्तस्तु पुंसि स्यान्मणिभेदे च कैतवे ॥ ९७ ॥
चर्मण्वती नदीभेदे कदलीपादपे स्त्रियाम् ।
चित्रगुप्तस्तु पुंसि स्याद्यमे तस्य च लेखके ॥ ९८ ॥
दिवाभीतः कुम्भिले स्यादुलूके कुमुदाकरे ।
दिवाकीर्तिस्तु पुंसि स्यान्नापितान्तावसायिनोः ॥ ९९ ॥
द्वीपवान् सिन्धुनदयोर्द्वीपवत्स्यापगाभुवोः ।
दृषद्वती नदीभेदे कात्यायन्यामपि स्त्रियाम् ॥ २०० ॥
स्याद्धूमकेतुरुत्पातभेदे वैश्वानरे पुमान् ।
नन्द्यावर्तः पुमान्वेश्मप्रभेदे भगवद्द्रुमे ॥ १ ॥
नदीकान्तः समुद्रे स्याद् हिज्जले सिन्दुवारके ।

नदीकान्ता स्त्रियां जम्ब्वां काकजङ्घौषधावपि ॥ २ ॥
नागदन्तो द्विपरदे गृहान्निर्गतदारुणि ।
नागदन्ती तु कुम्भायां श्रीहस्तिन्यामपि स्त्रियाम् ॥ ३ ॥
निष्कासितो निर्गमितेऽप्याहितेऽधिकृतेऽपि च ।
अथ निस्तुषितं त्यक्ते त्वग्विहीने लघूकृते ॥ ४ ॥
निराकृतिरनाकारेऽस्वाध्याये वारणे त्रिषु ।
स्त्रियां परिगतं प्राप्ते विस्मृतज्ञानचेष्टिते ॥ ५ ॥
अथ प्रणिहितं न्यस्ते प्राप्तेऽपि च समाहिते ।
अथ पल्लविते लाक्षारक्ते सपल्लवे तते ॥ ६ ॥
भवेत्प्रतिहितं द्विष्टे प्रतिस्खलितरुद्धयोः ।
प्रतिक्षिप्तं वारिते स्यात्प्रेषिते पञ्चकं त्रिषु ॥ ७ ॥
परिवर्तो विनियमे कूर्मराजेऽपवर्तने ।
परिस्रुता स्त्री वारुण्यां स्यन्ने स्यादभिधेयवत् ॥ ८ ॥
प्रधूपिता क्लेशितायां सूर्यगन्तव्यदिश्यपि ।
पञ्चगुप्तस्तु चार्वाकदर्शने कमठे पुमान् ॥ ९ ॥
प्रजापतिश्च दक्षादौ महीपाले विधातरि ।
प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च ॥ १० ॥
सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति ।
अथ प्रव्राजिता मांसीमुण्डीरीतापसीषु च ॥ ११ ॥
प्रतिकृतिरथार्चायां प्रतिनिधिप्रतीकारयोश्च स्त्री ।
पाशुपतो बकपुष्पे स्यात्पशुपत्यधिदैवते च तद्भक्ते ॥१२॥
पारिजातः सुरतरौ पारिभद्रतरावपि ।
पारावती गोपगीते नदीभिल्लवलीफले ॥ १३ ॥
पारावतः कलरवे तथा मर्कटतिन्दुके ।
पुष्पदन्तस्तु दिङ्नागभेदे विद्याधरान्तरे ॥ १४ ॥

पुरस्कृतोऽभिशस्तारिग्रस्ताग्रे कृतपूजिते ।
भगवान्ना जिने गौर्यां स्त्रियां पूज्ये तु वाच्यवत् ॥ १५ ॥
अथ भोगवती नागपुरीनद्योरहौ पुमान् ।
रङ्गमाता तु कुट्टिन्यां वृक्षरोगान्तरे स्त्रियाम् ॥ १६ ॥
लक्ष्मीपतिः पुमान्वासुदेवे नरपतावपि ।
व्यतीपातो महोत्पाते योगभेदापमानयोः ॥ १७ ॥
वनस्पतिर्ना द्रुमात्रे विना पुष्पफलद्रुमे ।
विनिपातो निपाते स्याद्दैवादिव्यसने पुमान् ॥ १८ ॥
विजृम्भितं तु चेष्टायां क्लीबं त्रिषु विकस्वरे ।
विवस्वान्विबुधे सूर्ये तन्नगर्यां विवस्वती ॥ १९ ॥
वैजयन्तो महेन्द्रस्य ध्वजप्रासादयोः पुमान् ।
वैजयन्ती पताकायां जयन्तीपादपे पुमान् ॥ २० ॥
भवेच्छतधृतिः पुंसि शक्रे च परमेष्ठिनि ।
शुभ्रदन्ती सुदन्त्यां स्यात्पुष्पदन्तेभयोषिति ॥ २१ ॥
समुद्धतं समुत्कीर्णे ऽप्यपनीते च वाच्यवत् ।
सदागतिर्नाकवातनिर्वाणेषु सदीश्वरे ॥ २२ ॥
सरस्वांश्च नदे चाब्धौ मान्यवद्रसिके स्त्रियाम् ।
वाणी स्त्री रत्नवाग्देवीगोनदीषु नदीभिदि ॥ २३ ॥
मनुपत्न्यामपि सत्यवती व्यासस्य मातरि ।
नारदर्चीकयोः पत्न्यां स्त्रियां पुंसि नृपान्तरे ॥ २४ ॥
समुद्रान्ता तु कार्पासीपृक्कादुरालभासु च ।
समाहितः समाधिस्थेऽप्युक्तसिद्धान्त आहिते ॥ २५ ॥
निर्विवादीकृतेऽपि स्यात्प्रतिज्ञाते च वाच्यवत् ।
समाघातो वधे युद्धे संख्यावान्पण्डिते पुमान् ॥ २६ ॥
संख्यायुक्ते ऽन्यलिङ्गो ऽथ सुधासूतिः पुमान्मखे ।

चन्द्रे सुभाषितो बुद्धे पुमान्सूक्ते नपुंसकम् ॥ २७ ॥
सूर्यभक्तस्तु बन्धूके पुंसि विष्ट्वर्कपूजके ।
सेनापतिः कार्तिकेये ऽप्यनीकाधिपतौ पुमान् ॥ २८ ॥
हिमारातिः पुमान्वीतिहोत्रे किरणमालिनि ।
हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः ॥ २९ ॥

( तपञ्चमम् )

अवलोकितो ना लोकनाथे त्रिषु निरीक्षिते ।
अपराजित ईशाजेष्ठ्यन्तरे ना ऽजिते त्रिषु ॥ ३० ॥
गिरिकर्णीजयादुर्गाशनपर्णीषु योषिति ।
उपधूपित आसन्नमरणे परिधूपिते ॥ ३१ ॥
स्याद्गणाधिपतिः पुंसि शङ्करेऽपि गजानने ।
भवेत्पिपतिषन् पित्सौ त्रिषु पुंसि विहङ्गमे ॥ ३२ ॥
पृथिवीपतिस्तु भूपाले ऋषभाख्यौषधौ पुमान् ।
मूर्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि च ॥ ३३ ॥
यादसाम्पतिरम्भोधौ पश्चिमाशापतावपि ।
वसन्तदूतश्चैत्रे स्यात्पिकपञ्चमरागयोः ॥ ३४ ॥
वसन्तदूती पाटल्यामभियुक्ते च योषिति ।

( तषष्ठम् । )

अर्धपारावतश्चित्रकण्ठे तित्तिरिपक्षिणि ॥ ३५ ॥

( तसप्तमम् । )

समुद्रनवनीतं स्यात्क्लीवं पीयूषचन्द्रयोः ।

( इति तान्तवर्गः । )

( थैकम् । )

थं रक्षणे मङ्गले च साध्वसे च नपुंसकम् ।

शिलोच्चये पुमानेव क्व चित्तु भयरक्षके ॥ १ ॥

( थद्वितीयम् । )

अर्थो विषयार्थनयोर्धनकारणवस्तुषु ।
अभिधेये च शब्दानां निवृत्तौ च प्रयोजने ॥ २ ॥
आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति ।
कन्था मृन्मयभित्तौ च तथा प्रावरणान्तरे ॥ ३ ॥
क्वथः स्याद्‌तिदुःखेऽपि निष्पाकेऽपि द्रवस्य च ।
कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि ॥ ४ ॥
काथो ना नेत्ररोगस्य भेदे च शठिते त्रिषु ।
ग्रन्थो ग्रथनाधनयोः स्याच्छास्त्राक्षरसंख्ययोः ॥ ५ ॥
ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः ।
गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः ॥ ६ ॥
तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च ।
अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥ ७ ॥
तुत्थमञ्जनभेदे स्यान्नीलसूक्ष्मैलयोस्त्रियाम् ।
दुःस्थः स्याद् दुर्गते मूर्खे दुःखेन तिष्ठति त्रिषु ॥ ८ ॥
प्रस्थो ऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि ।
पाथोऽर्के ऽग्नौ जले क्लीबं पृथुः स्यान्मरुति त्रिषु ॥ ९ ॥
त्वक्पर्ण्यां कृष्णजीरे ऽस्त्री पुमानग्नौ नृपान्तरे ।
प्रोथोऽस्त्री हयघोणायां नाकट्यामध्वगे त्रिषु ॥ १० ॥
मन्थः स्यात्पुंसि मन्थाने सात्क्तवे च दिवाकरे ।
यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति ॥ ११ ॥
रथः पुमानवयवे स्यन्दने वेतसेऽपि च ।
वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः ॥ १२ ॥
संस्थश्चरेऽवस्थिते स्त्री स्थिता सादृश्यनाशयोः ।

सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके ॥ १३ ॥
सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् ।

( थतृतीयम् )

अतिथिः कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु ॥ १४ ॥
अश्वत्थः पिप्पलद्रौ स्यादश्वत्था पूर्णिमातिथौ ।
अव्यथो निर्व्यथे सर्पे चारटीपव्ययोः स्त्रियाम् ॥ १५ ॥
उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान् ।
उपस्थः शेफसि क्रोडे तथा मदनमन्दिरे ॥ १६ ॥
उद्रथो रथकीले स्यात्ताम्रचूडाख्यपक्षिणि ।
क्षवथुर्ना क्षुते कासे कायस्थः परमात्मनि ॥ १७ ॥
नरजातिविशेषे ना हरीतक्यां तु योषिति ।
कापथः कुत्सितपथे उशीरे क्लीबमिष्यते ॥ १८ ॥
गोग्रन्थिर्ना करीषे स्याद् गोष्ठगोजिह्विकौषधौ ।
दमथस्तु पुमान्दण्डे दामे च परिकीर्तितः ॥ १९ ॥
निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके ।
निर्ग्रन्थो नग्नकेऽपि स्यान्निःस्वबालिशयोरपि ॥ २० ॥
प्रमथा स्याद्धरीतक्यां हरपारिषदे पुमान् ।
वरूथो रथगुप्तौ स्यात् वरूथं चर्मवेश्मनोः ॥ २१ ॥
मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे ।
वयस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च ॥ २२ ॥
सूक्ष्मैलायां च काकोल्यां पथ्यालीतरुणे त्रिषु ।
वमथुः पुंसि वमने गजस्य करशीकरे ॥ २३ ॥
विदथो योगिकृतिनोः शमथः शान्तिमन्त्रिणोः ।
षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान् ॥२४॥
समर्थस्तु हिते शक्ते सम्बद्धे ऽप्यन्यलिङ्गकः ।

सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्षपे ॥ २५ ॥

( थचतुर्थम् । )

अनीकस्थो रणगते हस्तिशिक्षाविचक्षणे ।
राजरक्षिणि चिन्हे च वीरमर्दनकेऽपि च ॥ २६ ॥
भवेदितिकथा पार्थवाच्यश्रद्धेयनष्टयोः ।
चतुष्पथं चतुर्मार्गे सङ्गमे ब्राह्मणेऽपि ना ॥ २७ ॥
अथ चित्ररथः सूर्यगन्धर्वान्तरयोः पुमान् ।
दशमीस्थो नष्टवीर्ये स्थविरेऽप्यन्यलिङ्गकः ॥ २८ ॥
प्राणनाथो यमे ना स्यादिष्टे प्राणाधिके मतः ।
वानप्रस्थो मधूकेऽपि स्यात् तृतीयाश्रमे पुमान् ॥ २९ ॥
भवेदुदरथिः पुंसि समुद्रे च वियन्मणौ ।

( इति थान्तवार्गः । )

( दैकम् )

दः पुमानचले दत्ते स्त्रियां शोधनदानयोः ।
छेदोपतापरक्षासु पुमांस्तु दातरि स्मृतः ॥ १ ॥

( दद्वितीयम् । )

अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान् ।
कन्दोऽस्त्री सूरणे शस्यमूले जलधरे पुमान् ॥ २ ॥
अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च ।
कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिद्ध्यन्तरेषु ना ॥ ३ ॥
क्षोदः स्यात्पुंसि रजसि पेषणे च प्रकीर्तितः ।
गदो भ्रातरि विष्णोः स्यादामये ना युधे गदा ॥ ४ ॥
छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः ।
छन्दो वशेऽप्यभिप्राये धीदापुत्रीमनीषयोः ॥ ५ ॥

नन्दिर्द्यूताङ्ग आनन्देऽस्त्री नन्दिकेश्वरे पुमान् ।
नदी सरिति शोणादौ ना नन्दा स्यादलिञ्जरे ॥ ६ ॥
गौर्यां तिथिविशेषे स्त्री निधिराजभिदोः पुमान् ।
निन्दा स्यादपवादेऽपि कुत्सायामपि योषिति ॥ ७ ॥
पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः ।
पादतच्चिन्हयोः स्थानत्राणयोरङ्कवस्तुनोः ॥ ८ ॥
श्लोकपादेऽपि च क्लीबं पुंलिङ्गः किरणे पुनः ।
पादो ब्रध्ने तुरीयांशे शैलप्रसन्तपर्वते ॥ ९ ॥
चरणे च मयूखे च वन्दा लतान्तरे स्मृता ।
भिक्षुक्यामपि वन्द्यां च विदुर्दन्तक्षतान्तरे ॥ १० ॥
भ्रुवोर्मध्ये रूपकार्यप्रकृतौ पृषते पुमान् ।
वेदितर्यन्यलिङ्गः स्यात् भद्रं कल्याणशर्मणोः ॥ ११ ॥
भेदो द्वैधे विशेषे स्याद् उपजापे विदारणे ।
मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः ॥ १२ ॥
मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः ।
अल्पे च त्रिपु पुंसि स्याद्धस्तिजात्यन्तरे शनौ ॥ १३ ॥
मृदुः स्यात्कोमलेऽतीक्ष्णे रदो दन्ते विलेखने ।
विदा ज्ञाने च निर्दिष्टा मनीषायां च योषिति ॥ १४ ॥
वेदः श्रुतौ च वृत्ते च वेदिः स्यात्पण्डिते पुमान् ।
स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले ॥ १५ ॥
शादः स्यात्कर्दमे शष्पे स्वादुर्मिष्टमनोज्ञयोः ।
सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे ॥ १६ ॥
स्वेदस्तु स्वेदने घर्मे द्रवत् क्लीबं वृक्कचित्तयोः ।

( दतृतीयम् )

अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम् ॥ १७ ॥

अङ्गदा याम्यदिग्दन्तिहस्तिन्यामपि योषिति ।
अर्द्धेन्दुरर्द्धचन्द्रे स्याद्गलहस्तनखाङ्कयोः ॥ १८ ॥
अर्द्धेन्दुः स्यादतिप्रौढस्त्रीयोन्यङ्गुलियोजने ।
अर्बुदो मांसकीले स्यात्पुरुषे दशकोटिषु ॥ १९ ॥
महीधरविशेषे नाऽथास्पदं पदकृत्ययोः ।
आसन्दो वासुदेवे स्यात्खट्वाभेदे च योषिति ॥ २० ॥
आक्रन्दः क्रन्दने व्हाने मित्रदारुणयुद्धयोः ।
भ्रातर्यपि च पुंसि स्यादामोदो गन्धहर्षयोः ॥ २१ ॥
ककुद् स्त्री ककुदोऽप्यस्त्री वृषाङ्के राड्ध्वजे वरे ।
क्षणदो गणके रात्रौ क्षणदा क्षणदञ्जले ॥ २२ ॥
कपर्दः खण्डपरशौ जटाजूटे वराटके ।
कर्णान्दुरुत्क्षिप्तिकायां कर्णपाल्यामपि स्त्रियाम् ॥ २३ ॥
क्रव्याद्रक्षसि पुंसि स्यान्मांसाशिन्यन्यलिङ्गकः ।
कामदा कामधेनौ स्त्री कामदातरि वाच्यवत् ॥ २४ ॥
कुमुद् त्रिषु स्यात्कृपणे कैरवे तु नपुंसकम् ।
कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ ॥ २५ ॥
गाभ्यार्यां पुंसि दिङ्नागे नागे शाखामृगान्तरे ।
कुसीदं जीवने वृद्ध्या क्लीबं त्रिषु कुसीदके ॥ २६ ॥
कौमुदः स्यात्कार्त्तिकिके चन्द्रिकायां तु कौमुदी ।
गोष्पदं गोपदश्वभ्रे गवाश्च गतिगोचरे ॥ २७ ॥
गोविन्दो वासुदेवे स्याद् गवाध्यक्षे बृहस्पतौ ।
गोनर्दमपि कैवर्तीमुस्तके पुंसि सारसे ॥ २८ ॥
जलदो मुस्तके मेघे जीवदो वैद्यविद्विपोः ।
तरद् स्त्रियां प्लवेऽपि स्यात्कारण्डे च विहङ्गमे ॥ २९ ॥
तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम् ।

दरद् स्त्रियां प्रपातेऽपि भयपर्वतयोरपि ॥ ३० ॥
दारदो विषभेदे स्यात्पारदे हिङ्गुले पुमान् ।
दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि च ॥ ३१ ॥
दृषद् निष्पेषणशिलापट्टप्रस्तरयोः पुमान् ।
धनदस्तु कुवेरे स्यात्पुंलिङ्गो दातरि त्रिषु ॥ ३२ ॥
नलदं स्यात्पुष्परसोशीरमांसीषु न द्वयोः ।
नर्मदः केलिसचिवे नर्मदा सरिदन्तरे ॥ ३३ ॥
निर्वादः स्याल्लोकवादे परिनिष्ठितवादयोः ।
निषादः स्वरभेदे स्याच्चण्डाले धीवरान्तरे ॥ ३४ ॥
प्रमदः सम्मदे मत्ते स्त्रियामुत्तमयोषिति ।
प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु ॥ ३५ ॥
प्रणादस्तु पुमांस्तारशब्दे च श्रवणामये ।
प्रासादो देवनृपयोर्गृहेऽथ वरदा स्त्रियाम् ॥ ३६ ॥
कन्यायां वाच्यलिङ्गस्तु प्रसन्ने च समर्द्धके ।
भसद् स्त्री भास्वरे योनौ मर्यादा सीमनि स्थितौ ॥ ३७ ॥
माकन्दः सहकारेऽस्त्री धात्रीनगरभेदयोः ।
मुकुन्दो निधिभिद्विष्णुरत्नभेदे च कुन्दुरौ ॥ ३८ ॥
मेनादस्तु पुमान्केकिमार्जारच्छागलेषु च ।
विशदः पाण्डुरे रक्ते शरद् स्त्री वत्सरेऽप्यृतौ ॥ ३९ ॥
शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः ।
शस्ये क्लीवं शरज्जातनूतनाप्रतिभे त्रिषु ॥ ४० ॥
षड्विन्दुः स्यात्कीटभेदपुण्डरीकाक्षयोः पुमान् ।
सम्पद् भूतौ गुणोत्कर्षे हारभेदेऽपि च स्त्रियाम् ॥ ४१ ॥
संविद् स्त्रियां प्रतिज्ञायामाचारज्ञानसङ्गरे ।
सम्भाषणे क्रियाकारे सङ्केते नाम्नि तोषणे ॥ ४२ ॥

सम्भेदः स्फुटने सङ्गे सुनन्दा रोचनोमयोः।

(दचतुर्थम्।)

अभिष्यन्दोऽतिवृद्धौ स्यादास्रावेऽक्षिगदेऽपि च॥ ४३॥
अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च।
अष्टापदी चन्द्रमल्ल्यां शरभे मर्कटे पुमान्॥ ४४॥
अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि।
अभिमर्दस्तु पुंसि स्यादवमर्दे सम्पराये च॥ ४५॥
एकपदं तत्काले नपुंसकं वर्त्मनि स्त्री स्यात्।
कटुकन्दः पुमान् शिग्रौ शृङ्गवेररसोनयोः॥ ४६॥
कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान्।
अथ कोकनदं रक्तकुमुदे रक्तपङ्कजे॥ ४७॥
चतुष्पदी तु पद्ये ना पशौ च करणान्तरे।
भवेज्जनपदो जानपदोऽपि जनदेशयोः॥ ४८॥
तमोनुदग्नीन्द्वर्के ना प्रतिपद् स्त्री तिथौ मतौ।
परिवादोऽपवादे स्याद्वीणावादनवस्तुनि॥ ४९॥
प्रियंवदः खेचरे ना प्रियवाचि तु वाच्यवत्।
पीठमर्दोऽतिधृष्टे स्यान्नायकस्य प्रियेऽपि च॥ ५०॥
पुटभेदो नदीवक्रे पतनातोद्ययोरपि।
महानादः कुञ्जरे स्याद् वर्षुकाब्दे महास्वने॥ ५१॥
मुचुकुन्दो वृक्षभेदे मान्धातृतनयेऽपि च।
मेघनादस्तु वरुणे तनये रावणस्य च॥ ५२॥
विशारदः पण्डिते च धृष्टे विष्णुपदं तु खे।
क्षीरोदे च स्त्रियां गङ्गारविसङ्क्रान्तिभेदयोः॥ ५३॥
शशबिन्दुः पुमान्वासुदेवे राजान्तरेऽपि च।
शतानन्दो मुनेर्भेदे देवकीनन्दनेऽपि च॥ ५४॥

